कविवरश्रीकमलाकान्तत्रिपाठिप्रणीतम्

# माधवरतिविलसितम्

(काव्यम्)



लोलदृष्टि वदनं स्मितचारु प्रीतिशालि वचनञ्च मुरारेः।
गोपिकाहृदयहारि च गीतं मानसेऽनुदिवसं कलयामि॥

व्याख्याकारः

कृष्णनारायणाचार्यः

(डॉ. कमलाकान्तत्रिपाठी)

श्रीमते रामानुजाय नमः  श्रीवादिभीकरमहागुरवे नमः

अनन्तश्रीविभूषितजगद्गुरुरामानुजाचार्यश्रीवासुदेवाचार्य-
'विद्याभास्कर'-प्रसादप्रसूनसनाथीकृतम्

कविवरश्रीकमलाकान्तत्रिपाठिप्रणीतम्

# माधवरतिविलसितम् (काव्यम्)

*व्याख्याकारः*
**कृष्णनारायणाचार्यः**
**(डॉ. कमलाकान्तत्रिपाठी)**
अध्यक्षचरः, मीमांसाविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

*सम्पादकः*
**डॉ. गिरीश दत्त पाण्डेयः**
संरक्षकः
भारतीयआर्यमर्यादाविज्ञानसमिति
वाराणसी

*सहसम्पादकौ*
**डॉ. दुर्गाप्रसादमिश्रः**
**श्री मनोजचतुर्वेदी**

**प्रकाशक**
**भारतीय आर्यमर्यादाविज्ञानसमिति**
**वाराणसी**
**२००९**

पुस्तकप्राप्तिस्थान—

१. **डॉ. कमलाकान्तत्रिपाठी**
२४, प्राचीन अध्यापकावास
सं.सं.वि.वि., वाराणसी

२. **कोशलेशसदन**
कटरा, अयोध्या, जनपद-फैजाबाद (उ.प्र.)-२२४१२३

३. **डॉ. गिरीशदत्तपाण्डेय**
अधर्मनिरपेक्षधाम, गङ्गापुर बाजार, वाराणसी



**प्रथमसंस्करण** : श्रावणपूर्णिमा, वि.सं. २०६६
१००० प्रतियाँ

**मूल्य** : १००.००

मुद्रक—
**श्रीजी प्रिण्टर्स**
नाटी ईमली, वाराणसी



# श्रीमज्जगद्गुरुरामानुजाचार्य स्वामी वासुदेवाचार्यजी महाराज

स्निग्धपर्णसुमनःफलभाज-
स्तोषितश्रुतिसुसिद्धविराजः।
चण्डतापशमनाय भवन्तु
वासुदेवगुरवस्तरवो मे।।२।।



## अनन्तश्रीविभूषितविश्वनाथावधूतजीमहाराज

दौर्भाग्यानलदग्धदीनवपुषां शीतांशुरेव स्फुटन्
श्रौतस्मार्तविधाद्विषां सुविपुलक्रोधो मुनीन्द्रः स वै।
दुर्वासा भवभीतिदूनमनसां दत्तः स एवं सता-
मात्रेयत्रितयीभृते प्रणतयः श्रीविश्वनाथाय ते।।१।।



श्रीमते रामानुजाय नमः  श्रीवादिभीकरमहागुरवे नमः

**अनन्त श्री विभूषित जगद्गुरु रामानुजाचार्य वेदान्तमार्तण्ड यतीन्द्र-स्वामिरामनारायणाचार्यकृपापात्र जगद्गुरु रामानुजाचार्य स्वामी वासुदेवाचार्य जी महाराज 'विद्याभास्कर'**

**अध्यक्ष**

**कोसलेश सदन धर्मादाय (ट्रस्ट)**

## ।। प्रसादप्रसूनम् ।।

**प्रतिक्षणोत्पन्नकवीन्द्रसंस्तुतिः सुरक्षितस्थावरजङ्गमस्थितिः।**
**अशेषशेषैकगतिर्मतौ च मे चकास्तु नारायणपादयोर्द्युतिः।।**

**लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम्।**
**अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।**

कर्णगोचरीकरणानन्तरमेव सहृदयहृदये परमाह्लादमयीं कामपि चमत्कृतिं समर्पयतो लोकोत्तरवर्णनानिपुणकवेः काव्यस्य माहात्म्यं नाश्रुताननुभूतपूर्वम्। सकललोकवृत्ताद्यनुभाविनः कवेस्तद्वचनात्म-सात्कारिणः सहृदयस्य च प्रभावबलेनैव श्रीमत्परमपूरुषनारायण-पदपङ्केरुहानुचरी तत्सहचरीसन्तापकरी भगवती भारती भूलोकमिमं प्रस्मृतब्रह्मलोकं सोत्कण्ठमधितिष्ठति। काव्यस्यैवैतद् माहात्म्यं यत् प्रशुष्कमपि हृदयं नृणां मसृणतमं विधाय तान् नैगममर्यादानुगामिनः करोति स्वार्थाभासाच्च प्रच्यावयति। स्वार्थाभासनिष्पादेऽन्धीभूतो हि जनःकिं किमकार्यं न करोति कारयति च। विशेषतः शासकवर्गः। अहो, सर्वतोऽभ्यर्हणीयतमा भगवती वागधिष्ठातृदेवता या सत्कविवदनाम्बुरुहबद्धविनिवेशा विभुतावलेपभिन्नमर्यादानपि सर्वभूपालप्रभृतीन् नृन् प्रकृतिरञ्जनाय प्रचोदयति स्वर्गोपमाञ्च भुवमिमां विधत्ते। सैवादिकवेर्भगवतः प्राचेतसस्य वदनवनरुहात् सुरभिततिरिव बहिर्भूता क्रौञ्चयुगलसन्तापकारिणं निषादं धिक्कृत्य त्रिभुवनालङ्कारभूताँश्च सामाजिकान् करुणरसोदधिसमवगाहनपरिपूत-मानसान् करोति। तस्या एव भगवत्या विपरिणामेन

श्रीमद्रामायणेनाधुनापि महापुरुषाणां हृदयपरिणाहिता निश्चीयते। दौरात्म्यमपि दुरात्मनां सज्जनहृदयोद्वेगविधायि सैवाविष्करोति यस्माद् बिभ्यज् जनस्तथा भवितुं स्वप्नेऽपि न वाञ्छति। एवमेव महर्षेर्व्यासस्य सा त्रिभुवनमपि शान्तरसनिर्भरमानसं करोति। तस्यैव महर्षेः—

**अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः।**
**श्वः श्वः पापीयदिवसा पृथिवी गतयौवना।।**

इति श्लोको देशकालयो दुःखमयत्वं दौरात्म्यञ्च प्रतिपादयन् सज्जनचेतःसु शममेव पुष्णाति।

**सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।**
**किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्।।**

इत्यादितदीयभारतीं निभालयतो जनस्य चेतो भवत्येव निःश्रेयसोन्मुखम्। महाकविकालिदासप्रभृतयः सर्व एव सत्कविशिरोमणयो रसकार्यचित्तद्रुत्यादिसम्पादनपरम्परया लोकस्थितये श्रुतिसुव्यवस्थितसत्पद्धतिमेव प्रकटयन्ति। अत एव श्रीमम्मटभट्टः—

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।**

इति काव्यप्रयोजनसूत्रे सद्यःपरनिर्वृतेरनन्तरमेवोपदेशयोगमाह। विभावानुभावव्यभिचारिनिबन्धनौचित्यचारुणा काव्येन विगलितवेद्यान्तरं स्वसंवेदनगोचरमानन्दैकघनं रसमनुभूय कृतकृत्यः सहृदयो जनो नूनमेव पर्यन्ते तदुपदिष्टसत्पद्धतिं हृदयेनाङ्गीकरोति सुरतान्ते प्राणवल्लभाया वदनाम्बुजात् क्षरदुपदेशामृतमिव कर्णविवरे प्रविष्टं प्रियतमो जनः। नैतादृशं कार्यं श्रुतिस्मृतिपुराणादीनि संपादयितुमलम्। एतावता कविवाङ्निर्मिते लोंकस्थितिसम्पादने विलक्षणं सामर्थ्यं प्रकटीकृतं भवति। नैतत् सर्वं रसविषयौचित्यसन्निवेशमन्तरेण संभवति। अत एव सर्वैरेव कविभिस्तत्रैव प्रयत्यते। यथोक्तं ध्वनिकृता—





**अवधानातिशयवान् रसे तत्रैव सत्कविः।**
**भवेत् तस्मिन् प्रमादो हि झगित्येवोपलक्ष्यते।।** इति।
(ध्वन्यालोके ३।२९)

अत्र शृङ्गाररसस्यैव सौकुमार्यातिशययोगित्वात् तत्परिपोषे कवीनां प्रयत्नविशेष उपदिश्यते। विनेयानामुपदेशविशेष औन्मुख्यं शृङ्गारद्वारैव भवति। तस्यैव नियमेन संसारिणामनुभवविषयत्वात् सर्वरसापेक्षया रमणीयतया प्रधानभूतत्वाच्च। यथोक्तं ध्वनिकृतैव—

**'शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशं गृह्णन्ति। सदाचारोपदेशभूता हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारिता'**। इति। (ध्वन्यालोके ३।३०)

एतेनेदमेव निश्चीयते यत् कवीनां भगवद्भक्तिविषयेऽपि शृङ्गाररससमावेशो न विषयलौल्याद् भवति, अपि तु तत्र विनेयानुन्मुखीकर्तुमेव। प्रकृतकाव्येऽपि तदर्थ एव सः।

तदेतत् काव्यं मुक्तकसन्दानितकविशेषककालापककुलकपर्यायबन्धपरिकथासकलकथाखण्डकथासर्गबन्धाख्यायिकाकथादिप्रभेदैर्नैकविधं विद्योतते। तत्रान्येन मुक्तमनालिङ्गितं मुक्तकं भवति। तदेतत् संस्कृतप्राकृतापभ्रंशेषु निबध्यते। द्वाभ्यां क्रियासमाप्तौ संदानितकं त्रिभिर्विशेषकं चतुर्भिः कलापकं पञ्चप्रभृतिभिश्च कुलकं निगद्यते। अत्र क्रियासमाप्तिकृतो भेदः। अवान्तरक्रियासमाप्तावपि वसन्तवर्णनाद्येकवर्णनीयोद्देशेन प्रवृत्तः पर्यायबन्ध उच्यते। एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रकारा परिकथा कथ्यते। एकदेशस्य वर्णना खण्डकथा समस्तफलान्तेतिवृत्तवर्णना च सकलकथा भवति। एतत्प्रकारद्वयं प्राकृत एव प्रसिद्धम्। समस्तवस्तुवर्णनाप्रबन्धः पुरुषार्थफलकः सर्गबन्ध उच्यते यस्योपनिबन्धः संस्कृत एव भवति। उच्छ्वासादिना युक्ताऽऽख्यायिका तच्छून्या च कथा भवति गद्यगुम्फिता। आदिनाऽभिनेयार्थं दशरूपकं गद्यपद्यमयी चम्पूश्च गृहीता। एतेषु सर्वेष्वेव काव्यप्रकारेषु मुक्तकाख्यः प्रकारोऽपि विच्छित्तिविशेषं

संपुष्णन् प्रथितमहिमा विभाति। सर्वाणि स्तोत्राणि मुक्तकेष्वेव गण्यन्ते यत्र मयूरशतकसाम्बपञ्चाशिकाप्रभृतीनि नैकानि काव्यानि विलसन्ति। अस्मत्सम्प्रदायेऽपि श्रीमद्वेदान्तदेशिकपदप्रवालप्रभृतिभिराविष्कृतानि सन्ति सहस्रशो मुक्तककाव्यानि यानि सामाजिकानां चेतःसु प्रविश्य प्रगाढतमःपटलविध्वंसनप्रणालिकया श्रीमद्भगवन्नारायणश्रीविग्रहं प्रकाश्य मुदेकमयीं चर्वणां निष्पादयन्ति। न च मुक्तके विभावादिसंघटनासंभवाद् न तदायत्तो रस इति शङ्क्यम्। तत्र कविकौशलबलेन यथोचितविभावादिसम्पत्तेः संभवात्। यथोक्तं ध्वनिकृता—

**'मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवे र्मुक्तकाः शृङ्गारसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव'**। इति। (ध्वन्यालोके ३।७)

अस्मच्छिष्यतमेन श्रीकृष्णनारायणाचार्योपनाम्ना डॉ. कमलाकान्तत्रिपाठिमहोदयेन श्रीवृन्दावनधामानुशीलयता माधवरतिविलसिताभिख्यं मुक्तककाव्यं व्यरचि यदधुना श्रीमन्नारायणकृपया प्रकाश्यते। अत्र श्रीकृष्णविषयकरतिरेव कवेः प्रायेण विलसति क्वचिच्च श्रीराधामाधवयो रतिविलसितानि चकासति।देवतादिविषयकरतेरभिव्यङ्ग्यत्वे भावध्वनेरेव व्यवहारो भवति, न रसध्वनेः। कान्ताविषयककान्तरतेस्तथा कान्तविषयककान्तारतेरेव रसे विश्रान्तेः। श्रीमद्भगवद्मायागृहीतानां जीवानां प्रायशस्तथैव चरमानुरागदर्शनात् परोक्षात्मनि परमेशे तददर्शनाच्च परमेशविषयकरतेरभिव्यञ्जनायां भावत्वमेवाहुराचार्याः। सत्यम्। तथैव दृश्यते, तथापि जन्मजन्मान्तरपुण्यप्रकर्षस्योदये सति परां काष्ठां प्राप्ता भगवद्विषयणी रतिरुदेत्येव भक्तस्य यस्या भक्तिरसत्वेन व्यवहारं कुर्वन्ति विद्वद्भक्ततल्लजाः। सामाजिकानां तथाभूता स्थितिर्नेति चेत्? न। लोकोत्तरविभावादिवैचित्र्येण तेषामपि भक्तिरसचर्वणासंभवात्। यदि बीभत्से रसानुभवः सामाजिकानां तर्हि भक्तौ कथन्न? भवतु यथा तथा। भावध्वनित्वेनास्य काव्यस्योत्तमत्वं निह्नोतुमशक्यम्। क्वचित् तद्रतौ

रसस्याङ्गतायां गुणीभूतव्यङ्ग्यप्रभेदो भवत्येव। न चासौ दोषः। तस्य रमणीयत्वेन ध्वनिकारादिभिः स्वीकारात्। अन्येषामलङ्कारादीनान्तु तदुपस्कारकत्वमेव। अन्यथा कथं तेषामलङ्कारत्वव्यपदेशोऽपि स्यात्। यथा प्रकृतकाव्य एव—

**वनं वृन्दाख्यं तत् तनुतरुलतोद्भासि मसृणं**
**तटं कालिन्द्याश्च स्रवदमृतपूरेण शिशिरम्।**
**अहो शैलं पुण्यं निजकरधृतं पक्षिविरुतं**
**क्व यातो हा कृष्ण! क्वथितमिव कृत्वा सरभसम्।।** इति।

अत्रोत्प्रेक्षालङ्कारःकरुणरसस्यानुगुणः। एवमन्यत्रापि द्रष्टुं शक्यते। अलङ्कारयोजनैकतानमतयः क्वचित् कवयो दृश्यन्ते। महाकवि-प्रबन्धेष्वपि तथाविधानि सन्त्युदाहरणानि। रसतिरोभावः प्रायस्तत्र भवति। अत्रापि यद्यपि कुत्रचिद् दृश्यते तथापि चर्वणायां व्याघातो न भवति। यथा—

**आवासस्ते सुललिततनो राधिकायाः प्रकाम-**
**च्छायासारैर्जितघनरुचेश्चेतसि प्रीतियोगात्।**
**नूनं तस्याः स्फुरितकुचयोस्तेन मध्ये निषण्णा**
**संक्रान्ताऽऽभा सततमसिता पद्मयोर्भात्यलीव।।**

अत्रोत्प्रेक्षाद्यलङ्कारैकतानः कविर्दृश्यते। न चैवमलङ्काररसिकता सर्वत्रैवेति शङ्क्यम्। रसनिर्वहणैकचेतसस्तस्य क्वचित् तन्निर्वहि रुच्यदर्शनात्। यथा—

**तनुतरलिततारा चन्द्रिकाचारुहारा**
**रजनिरियमिदानीं सौरभाक्ताश्च वाताः।**
**मधुमथन! पिकीनां पञ्चमी गीतिरारा-**
**दहह तव वियोगे चित्तमुद्वेजयन्ति।।** इति।

अत्र यदि पूर्णतो निर्वाहः स्यादलङ्कारस्य तर्हि रसभङ्गोऽपि स्यात्। अपृथग्यत्ननिष्पन्नस्यैवालङ्कारस्यालक्ष्यक्रमव्यङ्ग्ये ध्वनौ वस्तुतोऽ-लङ्कारत्वात्।

अस्मिन् काव्ये श्रीमद्भागवतादिषु समागतानां भगवद्वृत्तान्तानामेव स्थितिरस्ति। तथा चेयमाशङ्का समुदेति यद् वेदव्यासेनैव वर्णितत्वाद् व्यर्थमेतत् काव्यविरचनमिति। यद्येवं तर्हि महाकविकालिदासादीनामपि नूतनरघुवंशादिकाव्यविरचनप्रयासो वैयर्थ्यमापद्येत। वाल्मीकिव्यासाभ्यामेव सम्यक्तया सर्वोपन्यासात्। यद्युच्यते व्यञ्जकत्वादिसमाश्रयबलेन नूतनत्वमेव तत्काव्येष्विति, तर्हि अत्रापि तथैव कथन्न सम्भवति? समाहितं सर्वमेतद् ध्वनिकृतापि—

**दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।।**

(ध्वान्यालोके ४।४)

नवनवोन्मेषशालिन्यां प्रतिभायां विराजमानायां काव्यार्थानां विरामो नास्तीति स एवाह—

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः।। इति।**

(तत्रैव ४।६)

अस्माकं कविरपि—

**सा रात्रिश्चलमल्लिका मृदुतमा स्निग्धाम्बुवातोदरा**
**लक्ष्मीवक्त्रशरत्प्रभाप्रमुदितो नूत्नःप्रियश्चन्द्रमाः।**
**गोपीनिर्वृतिसंविधानरसिको वेणुस्वनस्तादृशः**
**सर्वे माधव! ते गताः क्व भवता सार्धं परित्यज्य गाम्।।**

इत्यत्र निजश्लोके—

**भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः।**
**वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः।।**

इत्यादिश्रीमद्भागवतीयश्लोकच्छायां गृह्णन्नपि करुणरससमाश्रयेण नवतामादधात्येव।

स्निग्धाम्बुपूरकणसिक्तसमीरमञ्जु-
कुञ्जानि भृङ्गरवमुद्रितदिङ्मुखानि।
तानि प्रकीर्णसुरभीणि जयन्ति कृष्ण-
क्रीडापराणि यमुनासरितस्तटानि।।

इत्ययं श्लोकस्तु वृन्दावनमेव भगवल्लीलाकृतार्थीभूतं नयनयोः पुरतःस्थापयितुं क्षमः। भवन्तु तत्प्रतिपादनपराः परःशताः प्राचीनाः श्लोकास्तथापि तेऽस्य श्लोकस्य रामणीयकं विहन्तुं नालम्। अस्य कवेर्वयं धन्यतमतामेव पश्यामो यदयं भगवद्विहारभूमिमेव वर्णयन् वाग्देवताकृपाभाजनतामुपैति।

भौतिकचाकचिक्यप्रनष्टधियस्तु केचित् न्यूयार्कनगरे विभुतावलेप-विवर्तभूतं नववृन्दावनं हृदयेन स्तुवन्तो निजजनैः साफल्यं मन्वते। नूनमेवं ते हतधियःप्रपन्नजनजीवनामृतं सकलतपस्विसेवितरजःकणं प्रतिरोमचित्संततिविसारि प्रतिक्षणमनोहारि विस्मयकारि च सकलमेव भरतवसुधालङ्करणं तीर्थजातं कदर्थयन्ति। तुषपरिपूरिते हि तदीयमानसे श्रीराधाधामनि विराजमानं परमेशशेषसिद्धगणैः संसेवितपूर्वं गह्वरवनमप्यकिञ्चित्करमेव। विदाङ्कुर्वन्तु ते प्रभुमायाप्रमुषितात्मानो नालं म्लेच्छाध्युषितभूमौ कृत्रिमं तीर्थाभासबृंहणं दुरितशमनायेति। वृन्दावनन्तु वृन्दावनमेव। वर्णयन्तु ते नूतनवृन्दावनप्राशस्त्यं जनयन्तु च प्राकृतजनचित्तविभेदम्। क्षणिकमेव तेषां दुःसाहसकारणं कार्यम्। सन्ति तथाविधा महात्मानो ये पुनरपि भारतीयजनमानसं वास्तविकतीर्थसमुत्सुकं विधास्यन्ति धिक्कारयिष्यन्ति च तदीयं कुप्रयासचञ्चूचापल्यम्।

सर्वथा सरसप्रबन्धेऽस्मिन् मुक्तककाव्ये रसविषयकमौचित्यं साधुसमन्वयं विलोक्यते। यद्यपि काव्येषूत्तमनायकेन सहाधमनायिकायाः शृङ्गारगुम्फनं नौचितीमावहति। भगवाँस्तु करुणावरुणालयः। कुब्जामपि सुरतप्रकारैः कृतार्थति सः। एतादृग्विषयेऽस्मदाचार्याः स्वाच्छन्द्यमवलम्बितुं प्रचोदयन्ति कविप्रवरान् यथा रसभङ्गो न भवेत्। यथोक्तं ध्वनिकृतैव—

**'यदितिहासादिषु रसवतीषु कथासु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यं नेतरत्'।** इति।

(ध्वन्यालोके ३।११)

**पुलकिततनुं तन्वीं कुब्जां कपोलचलालकां**
**वलितलतिकालोलामक्ष्णोर्विलासललद्गिरा।**
**सचकितमहो तामाहूय प्रभो! परिरभ्य च**
**स्तनमृगमदैराधिं साकञ्च चोरितवान् कथम्।।**

इत्यस्मिन् पद्ये महिषीणां श्रीकृष्णं प्रत्याक्षेपाभिप्रायेण कुब्जावृत्तान्तनिबन्धनादनौचित्यं समाहितमस्तीति कवेः कौशलं प्रतीयते[1]। एवमन्यत्र द्रष्टव्यम्। विस्तरभयाद् न वितन्यते। **'माधवरतिविलसितम्'** इति काव्यप्रकाशनात् प्राक् **'प्रेमपत्रम्'** इति नामकं काव्यमपि मुद्रापितं यस्मिन् भारतीयतीर्थादिकलुषीकरणतत्पराणां विदेशेषु वृन्दावनादिनवतीर्थप्रशंसकानां वेदबाह्यानां धर्माडम्बरोऽपि कटाक्षितः। भारतीयमेव वृन्दावनं सत्यं नेतरदिति रमणीयमुक्तमस्ति। श्रीमद्भगवच्चरणनलिनमधुपानव्यग्रमानसानां भक्तसहृदयानां हृदयान्यावर्जयदेतत् काव्यं कवेः सत्प्रयासं सफलयत्विति भगवन्तं श्रीनारायणं वयं कामयामहे। अन्ते च—

**कमलाकान्तसौभाग्यसम्पदः संपदन्त्विह।**
**श्रीकृष्णसेवया लोकः शश्वच्छान्तिञ्च गच्छतु।।**

इत्येव निगद्य विरमामः।

[signature]

---

१. भगवदङ्गसङ्गात् प्राक् कंसार्थमङ्गरागनिर्माणादिकर्मसहकृतमस्तु साधारण्यं कुब्जायाः, परन्तु व्रजाधीश्वरहृदयारविन्दासनस्थाय श्रीकृष्णायाङ्गरागसमर्पणमिषेण स्वात्मसमर्पणात्तस्या अपि भगवदीयत्वेनोत्तमोत्तमनायिकात्वमुपपन्नमेव। —सम्पादकः

# सम्पादकीयम्

अन्तर्भवेऽनन्त भवन्तमेव ह्यतत् त्यजन्तो मृगयन्ति सन्तः।
असन्तमप्यन्त्यहिमन्तरेण सन्तं गुणं तं किमु यन्ति सन्तः।।

कवि पण्डित श्री कमलाकान्तत्रिपाठी द्वारा प्रणीत **'श्रीमाधवरतिविलसितम्'** काव्य भक्तिप्रधान शतककाव्यों की प्राचीन परम्परा का नवीनतम निदर्शन है। समलैङ्गिकता के प्रति समर्पित इस शताब्दी में विषमलिङ्गीय रति की पोषिका काव्यरचना भौतिक ऐतिहासिक विकासवाद की वैज्ञानिक (यान्त्रिक) युगीन प्रगतिशीलता के प्रतिकूल होते हुये भी 'प्रजनश्चास्मि कन्दर्पः', इस उक्ति के अनुसार अधर्मनिरपेक्ष एवं आर्यमर्यादा के सेतुभूत मा (प्रकृति) एवम् धव (पुरुष) के संयोग का मधुरतम प्रतिफल है।

निर्गुण निराकार-निर्विकारनिर्विशेषातिशयबृहत् सर्वप्रपञ्चाधिष्ठान ब्रह्म प्रथमतः प्रकृति-पुरुष के रूप में विवर्त्तित होता है। सांख्यदर्शन का चरम प्रतिपाद्य प्रकृतिपुरुष-विवेक ही है। लीलाकैवल्यार्थ प्रकृति-पुरुष रूप में ब्रह्म का भोग्यभोक्तृविवर्त्तन सृष्टिहेतु आवश्यक है। रमण में द्विता नितान्त अपेक्षित है। ब्रह्म ने रमणोपपत्त्यर्थ स्वयं को द्वेधा किया तभी दोनों में संयोग से बहुभवनेच्छा उपपन्न हो सकी। प्रकृति-पुरुषात्मक जगत् में दो का (+ –) संयोग ही रसात्मक या रसनिष्पादक है। अमैथुनी प्रक्रिया से सृष्टि का विस्तार न होने पर मिथुनधर्म से प्रजा की वृद्धि उपनिषदों एवं तदर्थभूत श्रीमद्भागवतादि पुराणों से सिद्ध है।

'मिथुनधर्म' स्त्री स्त्री एवं पुरुष पुरुष में सम्भव नहीं है क्योंकि वह अप्रजन है। **सृष्टिहेतु प्रजनकन्दर्प है, न कि अप्रजनकन्दर्प। अप्रजनकन्दर्प निरर्थक तथा प्रजनकन्दर्प सार्थक है।** वेदों, गृह्यसूत्रों

और अन्य स्मृतियों में धर्म एवं काम्य विवाहों के भेदोपभेदों का विस्तार से निरूपण है। वैदिक विधान में सीता-राम, रति-काम, पार्वती-परमेश्वर, नल-दमयन्ती, अरुन्धती-वशिष्ठ आदि दाम्पत्य के श्रेष्ठ आदर्श हैं। कविकुलगुरु कालिदास ने इसी दिव्यदाम्पत्य को रघुवंशमहाकाव्य में ऐतिहासिकरूप से चरितार्थ किया है। ब्राह्मणादि चाण्डालान्त मूलभारतीयआर्यमानवीयचातुर्वर्ण्य का अविच्छिन्न सन्ततिपारम्पर्य श्रुतिसम्मत प्रजनकन्दर्प की महनीयता का उत्तमोत्तम निदर्शन है।

कुविवाह, संस्कारलोप एवं आचारभ्रंश अनार्यता के प्रयोजक हैं। इसीलिये गीता में अर्जुन ने विजातीय, संस्कारहीन, आचारशून्य काम को कुलधर्म और जातिधर्म का शत्रु एवं अनार्यता का प्रबल हेतु सिद्ध करते हुए समाज, राष्ट्र एवं विश्व के लिए घातक घोषित किया है। वैध दाम्पत्य से ही राष्ट्र एवं विश्व का मङ्गल सम्भव है। पार्वतीपरमेश्वर के दिव्य-संयोग से निष्पन्न रस चराचरात्मक जगत् के कण-कण में चेतना का संचार करता है। वही आनन्दानानन्द, विज्ञानाविज्ञान, ब्रह्माब्रह्म, पञ्चभूतापञ्चभूत, कार्यात्मक विश्वप्रपंच का हेतु है। उसी दिव्य दाम्पत्य को शब्दार्थसाहित्य के रूप में कविकुलगुरु ने काव्यसृष्टि का मूल माना है। पार्वती-परमेश्वर का दिव्य दाम्पत्य ही शब्दार्थयुगल[१] है जो अव्याकृत ब्रह्मानन्दमहासमुद्र की दो तरंगे हैं। सदानन्दतरंग शब्द एवं चिदानन्दतरंग अर्थ है। अर्थात् शब्द, अर्थ एवम् दोनों का साहित्य आनन्द रूप है, रस रूप है। रस का अङ्कुर भाव है। भाव सीता है रस राम है। भाव राधा, रस श्याम, भाव रति, रस काम, भाव पार्वती, रस शिव। इस प्रकार एक अखण्ड रस ही अनेकानेक रूपों में विवर्त्तमान है। अतः शब्द एवं अर्थ भिन्न होते हुए भी अभिन्न हैं। आनन्द महासमुद्र की प्रेमात्मक एवं सौन्दर्यात्मक तरंगे अन्योन्याभिन्न, अन्योन्यालिङ्गित

---

१. शब्दस्वरूपमखिलं धत्ते शर्वस्य वल्लभा। अर्थस्वरूपमखिलं धत्ते बालेन्दुशेखरः।।
अभिनवगुप्त

नित्यपरिष्वक्त हैं। राधामाधव का तदभिन्नाभिन्नत्व ही **'श्रीमाधवरतिविलसितम्'** का चरमप्रतिपाद्य है जो भावप्रधान है तथा अद्वैतसिद्धिकारादि महानुभावों की दृष्टि में रसात्मक भी है।

वस्तुतः भाव एवं रस प्रेम एवं सौन्दर्य की तरह अभिन्न एवं भिन्न दोनों हैं। कहीं भाव रस की अपेक्षा उत्कृष्ट होता है तथा कहीं रस भाव की अपेक्षा उत्कृष्ट होता है। आनन्द की पुष्टि तो भाव एवं रस दोनों के अन्योन्य योग से ही होती है—'न भावहीनोस्ति रसो, न भावो रसवर्जितः'। पार्वती एवं परमेश्वर वस्तुतः उभयोभय भावात्मा एवं उभयोभयरसात्मा हैं।

'साहित्य' की अवधारणा दिव्य युगलोपासना के रूप में वैदिक उपासनाकाण्ड में दर्शनीय है। ज्ञान एवं कर्म का समुच्चय श्लाघनीय है। क्रियाविहीन ज्ञान भार है तथा ज्ञानहीन क्रिया निरर्थक है। जीवनभर जलताडन कर्म होता हुआ भी अप्रजनकन्दर्प के समान निष्फल है। उसी प्रकार स्त्री का स्त्री के साथ, पुरुष का पुरुष के साथ सम्बन्ध भी निरर्थक है। पुरुष-स्त्रीसम्बन्धात्मक प्रजनकन्दर्प को धर्माविरुद्ध काम कहा गया है। समलैङ्गिकता निरर्थक काम के अतिरिक्त कुछ भी नहीं है। 'माधवरति' ही सार्थक काम है जो आर्यसन्तान की जननी है। इस दृष्टि से **'माधवरतिविलसितम्'** काव्य अपने उद्देश्य में अत्यन्त सफल है।

भगवान् श्रीकृष्णद्वैपायनव्यास ने अव्याकृत ब्रह्म को 'निर्विशेष, रस' कहा है जिसका स्वरूपलक्षण 'सत्यं ज्ञानमनन्तं ब्रह्म' है। आग्नेय महापुराण के साहित्याध्याय में इसी का उपबृंहण करते हुए कहा गया है—

**अक्षरं ब्रह्म परमं सनातनमजं विभुम्।**
**वेदान्तेषु वदन्त्येनं चैतन्यं ज्योतिरव्ययम्।।**
**आनन्दः सहजस्तस्य व्यज्यते स कदाचन।**
**व्यक्तिस्तस्यैव चैतन्यचमत्कारसमाह्वया।।**

यही चैतन्यचमत्कार विभावादिसम्वलित, रत्याद्यवच्छिन्न होने पर श्रृंगाररादि नव रस रूप में व्यक्त होता है।

सोपाधिक आनन्दों का मूल निरुपाधिक आनन्द ही हो सकता है। मानुष आनन्द से ब्रह्मानन्द पर्यन्त दशदशगुणोत्तराधिक आनन्दों की विवेचना तैत्तिरीयानन्दवल्ली में है। उसी ब्रह्मानन्द की प्रकृति-पुरुषात्मक अभिव्यक्ति अनन्तानन्त जीवों में होती है। यही 'एकोऽहं बहु स्याम्' श्रुति का स्वारस्य है। यह ब्रह्मानन्द स्त्रीपुन्नपुंसक न होते हुए भी स्त्रीपुंन्नपुंसकात्मक है।

**स वै न देवासुरमर्त्यतिर्यङ्**
**न स्त्री न षण्डो न पुमान् न जन्तुः।**
**नायं गुणः कर्म न सन् न चासन्**
**निषेधशेषो जयतादशेषः।।**

एवं श्रुति में कहा गया है—

**त्वं स्त्र्यसि त्वं पुमानसि त्वं कुमार उत वा कुमारी।**

वह कुछ नहीं होता हुआ भी सब कुछ है। कहीं नहीं होता हुआ भी सर्वत्र है। किसी का न होता हुआ भी सबका है। वह निर्गुण निराकार होता हुआ सगुणनिराकार एवं सगुण साकार भी है। वही (सगुण साकार) ब्रह्म राधा तथा माधव के रूप में अभिव्यक्त है। वही श्रीमद्भागवत का श्रीकृष्णतत्त्व, शिवमहापुराण का पार्वतीपरमेश्वर एवं विष्णुमहापुराण का श्रीविष्णुतत्त्व है।

वह एक होता हुआ भी अनेक रूपों में अभिव्यक्त होता है। जीव रूप में वही उत्पन्न होता है तथा ईश्वर रूप में अभिव्यक्त होता है। उत्पत्ति कर्मसापेक्ष तथा अभिव्यक्ति स्वैच्छिक होती है। उसमें कर्मपारवश्याभाव है। जीवकी उत्पत्ति जन्म एवं ईश्वर की उत्पत्ति (अभिव्यक्ति) अवतार है। श्रुतिस्मृतिपुराणरामायणमहाभारतादि सब उसी निर्विशेष के सविशेष होने की कथा है।

अपौरुषेय एवं आर्ष वाङ्मय ही लौकिक संस्कृत भारती के शब्दार्थात्मकस्वरूप के स्रोत हैं। कालिदास, भासादि के काव्य, नाटक भी अपौरुषेय एवं आर्षवाङ्मय के विवर्तभूत, वेदार्थ के कान्तासम्मित उपबृंहण ही हैं।

'श्रीमाधवरतिविलसितम्' शतक को पूर्वप्रचलित शताधिक काव्य (गीति) शतकों की परम्परा की अविच्छिन्न कड़ी के रूप में देखते हैं। राधामाधव की रति ही कविनिष्ठ तदुभयविषयणी रत्याकाराकारित होती हुई शब्दार्थयुगल काव्य रूप में प्रकट हुई है। इस काव्य में कहीं भी अनौचित्य का संस्पर्श नहीं है। अतः यह भावध्वनिप्रधान काव्य का उत्तम निदर्शन है। देवविषयक रति की प्रधानता होने के कारण इस काव्य में भावध्वनि की ही प्रधानता है। मधुसूदन सरस्वतीप्रभृति के अनुसार यह काव्य **भागवत रसात्मक** है। भक्ति-रसायन एवं भक्तिरसार्णव में भक्ति का रसत्व स्थापित किया गया है।

कवि ने स्वयं ही संस्कृत एवं हिन्दी में स्वोपज्ञ व्याख्याओं के द्वारा अपने काव्य को सरस, सरल एवं सुबोध कर दिया है जिससे **समलैङ्गिक एवं विषमलैङ्गिक, दोनों की ही श्रोत्रमनोभिरामता उपपन्न हो सकेगी।**

धर्मशुद्धि, पातित्यपेटिका, प्रसुप्तोन्मेष में कवि उग्र शास्त्रार्थी है। 'प्रेमपत्रम्' में तो कवित्व एवं वादप्रियता दोनों ही मुखरित हैं। 'महाभारतसंग्राम एवं भीष्मनिर्वाण' में कवि की सम्पादनकुशलता व्यक्त होती है। किन्तु **माधवरतिविलसितम् में त्तो कवि की भक्ति-संवलित चित्तवृत्ति ही दृष्टिगोचर होती है।**

समलैङ्गिकता के लिए प्रयत्नशील भ्रान्त उग्र भौतिकवादी विकृतमानव को यह ज्ञान नहीं है कि काम को **'प्रजनयज्ञ' का रूप वेद ने ही दिया है जिसका दिव्य स्वरूप 'ब्राह्मविवाह' है।** ब्राह्मविवाह से ही राम-कृष्ण, युधिष्ठिर-अर्जुन जैसे कालजयी

शूरवीर, गोरा-बादल, राणाप्रताप, शिवाजी, गुरुगोविन्द सिंह, सुभाषचन्द्र बोस, श्रीरामकृष्ण परमहंस, शंकराचार्य, रामानुजाचार्य, वल्लभाचार्य, मध्व निम्बार्काचार्य, श्रीविष्वक्सेनाचार्य, श्रीकरपात्रीस्वामी आदि प्राणिमात्र के हित के लिए स्वयं को समर्पित करने वाले महापुरुषों का जन्म होता है।

**'माधवरतिविलसितम्'** शीर्षक का निहितार्थ समलैङ्गिक यौन सम्बन्ध को वैध ठहराने वाली वेदबाह्य, धर्मनिरपेक्ष मनोवृत्ति के समक्ष सुमेरुकल्प प्रश्नचिह्न ही है। मा + धव-रति ही मानवता का मूल है, यही भारतीयता भी है। ऐसे दिव्य काव्यप्रणयन के लिए कवि श्री कमलाकान्तत्रिपाठी धन्यवाद के पात्र हैं।

डॉ॰ गिरिजाशंकर पाण्डेय

संरक्षक
भारतीयआर्यमर्यादाविज्ञानसमिति
अधर्मनिरपेक्षधाम,
गंगापुर बाजार, वाराणसी

नारायणायेति समर्पयामि

ब्रह्मलीनअनन्तश्रीविभूषितस्वामीअखण्डानन्दसरस्वतीजीमहाराज



कृपोदन्वल्लोलोल्ललदवनकल्लोलसुभगैः
कृतं यैः सोल्लासं श्रुतमयमहो मे चलमनः।
स्फुटत्प्रत्यग्ब्रह्मप्रमदघनमन्तः कलयता-
मखण्डानन्दानां सरतु भुवि तेषां गुणगणः।।३।।

## अनन्तश्रीविभूषितमहामण्डलेश्वर
## स्वामीशारदानन्दसरस्वतीजीमहाराज



स्वच्छप्रसादावलिराजमाना
सन्न्यासधर्मेण निरस्तमाना।
श्रीशारदानन्दसरस्वती मे
क्षेमप्रभाभासुरतामुपेयात्।।

# माधवरतिविलिसितम्

शान्तिं शान्तोचितानां नयति नयवतां यो यशश्चापि चम्प-
च्चद्रांशूनां पृथिव्याञ्चयमिव तनुते स्फारभक्तिश्रितानाम्।
यस्याङ्के कान्तिकम्रा विलसति सततं मुक्तिमालेव गौरी
कामारेस्तस्य नित्यं जयति चरणयोश्चारुता चित्रचित्रा।।१।।

सहृदयहृदयप्रकाशः

मङ्गलाचरणम्

अखण्डं सहजञ्चैव सच्चिदाकारविग्रहम्।
सर्वशेषितया भान्तं तमानन्दमुपास्महे।।१।।

जगत्यामागत्य प्रभुपदपरागैकरसिकं
जगत् सर्वं भक्त्या य इह कृतवान् वासितमिव।
स वै ब्रह्मव्याख्याप्रकटमहिमा ध्वान्तमखिलं
यतीन्द्रः कोऽप्यन्तर्मम हरतु रामानुजमुनिः।।२।।

लोकालोकमहीध्रतः समुदितानूरुप्रभामात्मन-
श्छायाभिस्तुदतीव भर्तृसदनं प्राप्य प्रसन्नानना।
नूत्ना कापि वधूरिव प्रमुदिता श्रीवासुदेवस्य नो
मोहध्वान्तविदारणाय नखरज्योतिस्तति र्जयताम्।।३।।

शमयति यमिनां यस्तापमात्मावभासा
वितरति पदमुच्चैर्यश्च शुद्धं तुरीयम्।
परमशिवमपि द्राग् लीलया लोलयन्तं
सदयमिह भवानीनन्दनं तं नमामि।।४।।

दूरोत्क्षिप्तमुधाप्रतिग्रहभरोऽप्यभ्यागतेभ्यो द्रुतं
सत्कारप्रवणो महामुनिभरद्वाजायते यः सदा।
तं वै शान्तमनोरथं भगवतो दत्तस्य दिव्यान् गुणान्
सर्वत्रैव दधानमद्भुतगतिं श्रीविश्वनाथं नुमः।।५।।

विगलितभवबन्धः प्राप्तसच्चित्सुखश्रीः
परपुरुष इवात्र भ्राजमानः समन्तात्
विशदयतु यशः श्रीशारदानन्दनामा
पशुपतिपदपद्माघ्राणतृप्तो यतिर्मे।।६।।

भगवतो माधवस्य विधीयमानायाः स्तुतौ पदतदर्थसम्पत्-संभारसिद्ध्यर्थमादौ सकलमङ्गलनिधानं पार्वतीपतिमेव कविः स्तौति—शान्ति शान्तेति। कामारेः शिवस्य चरणयोश्चारुता जयतीत्यनेनान्वयः। सा च चारुता नृत्यनृत्तादिरूपचित्रैश्चित्रा वैचित्र्यान्विता। अत्र पूर्वचित्रपदमर्थान्तरसंक्रमितवाच्यम्। तदीय-चरणयोर्विस्मयविधायिक्रियाकलापसम्पादनात्। जयतीत्यनेन नमस्कार आक्षिप्यते। सर्वदा तत्रास्ति कविः प्रणत इत्यपि लभ्यते। कथम्भूतोऽसौ शिवो यस्य चरणयोश्चारुता तथाविधेत्याह शान्तिमिति। शान्तोचितानां शान्तिसम्पन्नानामौचित्यशालिनां प्रपन्नानां शान्ति नयति चेतसीत्यर्थः। शान्तिरात्मबोधस्य पूर्वपीठिका 'शान्तो दान्त उपरतस्तितिक्षुरिति श्रुतेः। औचित्यञ्च भगवदनुशासनविषयमेव। अत एव शिष्टा भगवदनुशासनरूपवेदमर्यादां नातिक्रामन्ति। अत आह नयवतामिति। सकललोकशास्त्रनीतिसम्पन्नानां पर्यन्ते स्फारभक्तिमाश्रितानां पृथिव्यां यशोऽपि तनोति। कथमिव? आह—चम्पच्चन्द्रांशूनां चयमिव समुदायमिवेत्यर्थः। चम्पन्तश्चलन्तश्च ते चन्द्रांशवश्चम्पच्चन्द्रांशवस्तेषाम्। एतेन यशसः वैशद्यं प्रभूतत्वञ्च ध्वन्यते। भगवानेव तथाविधां सम्पत्तिं वितरति नान्य इत्यपि

व्यञ्जनया प्रतिपाद्यते। भगवतः कृपा वेदाचारविचारसम्पन्नानामुपर्येव भवति नान्येषामिति नास्ति मीमांसादिशास्त्रविरोधः। मर्यादातिक्रमे प्रत्यवायश्रवणात् अतिक्रान्तमर्यादेषु नास्ति भगवतः कृपालेशसम्भावनापि। पुनः कथंभूतः शिव इति—आह यस्येति। यस्य क्रोडे कान्त्या कमनीया भगवती गौरी सकलसौभाग्यप्रदातृत्वेन वेदादिशास्त्रेषु प्रसिद्धा निरन्तरं मुक्तिमालिकेव विलसति। अहो भगवतः सामर्थ्यं यत् त्रिपुरसुन्दरी नित्यं तस्याङ्के विराजते तथापि असौ कामारिरेवेति कामारिपदस्य व्यञ्जकत्वं नापलपितुं शक्यम्। अत्र कवेः भगवति रतेरेव पुरःस्फूर्तिकत्वाद् भावध्वनिः। यथाहुराचार्याः 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्तः' इति। अत्र पार्वतीपरमेश्वरयोः शृङ्गारस्यापि प्रतीतेर्गुणीभूतव्यङ्गतास्तीति न शङ्कनीयम्; कामारिपदेन शृङ्गारतात्पर्यस्य व्यवच्छेदात्। मुक्तिमालेवेत्युत्प्रेक्षाया अपि तत्र सहकारित्वादिति दिक्॥१॥

### भाषानुवाद

जो भगवान् शिव नीतिमार्ग पर चलने वाले शान्तिसम्पन्न पुरुषों के चित्त में शान्ति का सम्पादन करते हैं तथा विस्तृत भक्तिभाव से संपृक्त जनों की कीर्ति का विस्तार पृथ्वी पर संचलित चन्द्रिका के प्रसार के समान करते हैं और जिसके अङ्क में कान्तियों से कमनीय भगवती पार्वती मुक्तियों की श्रेणी के समान विराजमान रहती हैं, उस काम के शत्रु भगवान् शिव के चरणों की चारुता सर्वोत्कृष्ट है जो नृत्यादि प्रकारों से अद्भुत है॥१॥

क्रूराणां वक्त्रकुण्डाद् विगलितगरलैर्लूनहृत्पङ्कजानां
वामानामक्षिपाताद् दलितकुमुदिनीनम्रमुग्धाननानाम्।
साधूनां नित्यलीलाललितनवपुरीमोदनद्यां विहर्तुं
तारं बद्धादराणां भवति भगवतो भूतयेऽत्रावतारः॥२॥

**सहृदयहृदयप्रकाशः**

स्तुतिविषयस्य भगवतो विष्णोर्भुवि अवतारप्रयोजनमाह— क्रूराणामिति। प्रपन्नानामित्यध्याहार्यम्। तेषां भूतये सर्वविधयोग-क्षेमविधानाय अत्र पृथिव्यां भगवतो मनुष्यादिरूपेणावतारो भवतीत्यनेन भगवतः स्वार्थपरामर्शराहित्यं सूच्यते। तथा च तदीया वाणी 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन' इति। कथम्भूतानां प्रपन्नानामिति पादत्रयेण तद्विशेषणान्येवाह क्रूरेति। क्रूराणां मर्यादाविधुराणां पापादिकर्मस्वनुरक्तानां यदस्ति विषकुण्डमिव मुखकुण्डं तस्मात् कटूक्तिरूपनिर्गतकालकूटप्रायैर्गरलैर्विषैर्लूनं भिन्नं हृदयकमलं येषां तेषाम्। पुनश्च कौटिल्यादिगुणगणसम्पन्न-कामिनीनामक्षिपातात् नयनबाणपातात् विदीर्णकुमुदिनीव स्वाभाविकनम्रतामौग्ध्यादिगुणविशिष्टमाननं येषान्तेषाम्। अत्रोपमया मुखे विच्छायत्वप्रतीत्या तेषां हृदयविदीर्णताऽनुमीयते। साधूनां परहितसंपादनपराणाम्, साध्नोति परकार्याणीति व्युत्पत्तेः। पुनश्च नित्यलीलेत्यत्र भगवत इत्यध्याहार्यम्। भगवतो माधवस्य या गोपगोपाङ्गनाभिः समं नित्यलीला सैव ललितनूतननगरी तस्यां या मोदस्य परमानन्दस्य नदी तस्यां विहर्तुं दीर्घं बद्ध आदरो येषान्तेषामिति। अत्रोत्तरोत्तरविशेषणस्य प्राशस्त्याङ्गीकारात् भगवदवतारे तदीयचरितामृतस्वीकरणलुब्धा एव प्राधान्येन निमित्तम्, अन्येषामवतारं विनैव स्वीयसामर्थ्यादेव समीहितस्य संसाधनात्।।२।।

**भाषानुवाद**

भगवान् श्रीनारायण के अवतार का प्रयोजन इस श्लोक से प्रतिपादित है। प्रपन्नजनों की भूति अर्थात् भव्यता के लिए ही यहाँ भूलोक में भगवान् का अवतार होता है। प्रायः साधु स्वभाव वाले प्रपन्न अन्यों से त्रस्त होते हैं। अत एव कहते हैं कि क्रूर पुरुषों के मुखरूपी कुण्ड से निकले हुए विष से जिनका हृदयकमल विदीर्ण हो गया है और सुन्दरियों के नयनबाणों के आघात का प्रभाव

जिनके मुख में विराजमान है, इसीलिए विदलित कुमुदिनी के समान जिनका मुग्ध मुख झुक गया है तथा जो साधु पुरुष भगवान् की नित्यलीलारूपी ललित (मनोहर) नयी नगरी में बहने वाली आनन्द की नदी में विहार करने के लिए पूर्णतः आदरबद्ध हो गये हों।।२।।

**रामाभ्यो रासि रायं रमणजनमनोहारिणं राधिके त्वं**
**कस्मान्मे मन्मथेहां शिथिलयसि शरच्चन्द्रिकायां मुधेति।**
**आलप्याशायुतो यः सरभसदयितालिङ्गने संप्रसक्तो**
**भक्तार्त्या स्फूर्तितिर्यक्कृतभुजपरिघःकेशिहा सोऽवतान्नः।।३।।**

**सहृदयहृदयप्रकाशः**

लीलोपन्यासमुखेन माधवं स्तौति 'रामाभ्य' इति। स प्रपन्नत्राणप्रदातृत्वेन तदार्तिसमुच्छेदनकर्तृत्वेन प्रसिद्धः केशिहा केशिनामकस्य दैत्यस्य हन्ता माधवो नः अस्मान् अवताद् रक्षत्वित्यनेनान्वयः। अत्र केशिहेति नामोल्लेखात् भगवतः प्रपन्नरक्षायां सततोद्योगशालित्वं ध्वन्यते। तस्य प्रपन्नरक्षोद्योगशालित्वमेव ख्यापयितुमाह—रामाभ्य इत्यादिना। यामुनतटवर्तिनिकुञ्जमसृणोदरे स्वीयप्रेयस्या राधया सह तिष्ठन् क्रीडायां वैमुख्यं विलोकयन् श्रीकृष्णः क्रीडायां तदानुकूल्यं विधातुं चाटूक्त्येदमाह—अयि राधिके त्वं सुन्दरीभ्यः रायं सुषमादिगुणसमुदायरूपं धनं रासि ददासि येन सर्वे रसिका तासु वशीभूता इव प्रवर्तन्ते। यतो हि तद्धनं रमणजनानां मनांसि हर्तुं चोरयितुं नियतस्वभावमप्यस्ति। एतदभिप्रायेणैव रमणजनमनोहारिणमिति विशेषणोक्तिः। एवं त्वं सामान्यवनिताभ्यो ललितरामणीयकसम्भारप्रदानेन सर्वानपि रमणजनानुपकरोषि, अतः आनुकूल्यद्वारा मय्यपि उपकारं विधत्स्वेत्यर्थः। किन्त्वत्र विपरीतमेव दृश्यते यतोहि मम मन्मथेहां शिथिलयसि। तत्तु मुधैव, किञ्चित्प्रयोजनसत्त्वे तत्रौचित्यमपि स्यादिदानीं न तदपीति मुधापदव्यञ्जकत्वमाकलनीयम्। एतदेव

पृच्छति कस्मादिति। उचितावसराभावादेवं विधीयत इत्याशङ्कां निराकर्तुमाह—शरच्चन्द्रिकायामिति। शरदश्चन्द्रिका शरच्चन्द्रिका। सा च कामिनोर्मनोभवकलिकाविकासकत्वे परां प्रसिद्धिमुपगता, तस्यां समुज्जृम्भमाणायां वैमुख्ये न केवलं ममैव हानिः, अपि तु लोकोत्तराह्लादाप्राप्त्या तवापि महती हानिरित्यपि ध्वन्यते। एवम् आलप्य कामावेगात् सदैन्यमुक्त्वा भगवान् आशायुतः सरभसं सत्वरं यथा स्यात् तथा दयितायाः स्वीयप्रेयस्या आलिङ्गने सर्वाङ्ग-संश्लेषे संप्रसक्तः सम्यग्रूपेण प्रसक्तो यदा तदैव भक्तार्त्या भक्तस्य भगवदेकशरणस्य आर्त्या पीडया स्फूर्तितिर्यक्कृतभुजपरिघः संजातः। स्फूर्त्या भक्तत्राणे सततोत्साहसत्त्वेन वीरोचितक्रियया तिर्यक्कृतौ भक्तपीडाजनके दुष्टे प्रहाराय भुजौ परिघाविव येन सः। अत्र पूर्वं विमुखीं पश्चात् प्रसादादिना विलासाय प्रवर्तितामपि प्रेयसीमालिङ्गनादिजन्याह्लादेन तत्क्षणं सम्पादनयोग्यामपि उपेक्ष्य स्वयमपि यौवनसर्वस्वभूतं मदनोल्लासं तृणीकृत्य भगवान् भक्तार्तिनिवारणे धावतीति अहो लोकोत्तरमहार्घता भगवत एव नान्येषामिति। अत्र शृङ्गारसमुच्छेदनद्वारा वीररसातिरेकस्य गुणत्वमेव भवति। लोकोत्तरकार्यविधानादेव। अद्भुतत्वमपि भगवतः प्रतीतिपदवीमधिरोहति। भक्तविषये भगवतो लौकिकवैदिक-सर्वमर्यादापरित्यागः पुराणादिषु प्रतिपादितः। यथा भीष्मप्रतिज्ञा-प्राशस्त्याय स्वीयशस्त्राग्रहणरूपप्रतिज्ञोपेक्षा, शबरीप्रेमाङ्गीकरणाय तदुच्छिष्टकर्कन्धूफलभक्षणम्, अधमयोनिसमुद्भूतया कुब्जया सह रतिविलासः। महाकविनापि सूष्ठु निबद्धमुत्तररामचरिते, यथोक्तं तत्र श्रीरामभद्रेण—

'स्नेहं दयां च सौख्यञ्च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा'।। इति।।३।।

### भाषानुवाद

हे राधिके! तुम अन्य सुन्दरियों को ऐसी लावण्य विलाससंपत्ति का वितरण करती हो जो उनके रमण जनों के मन का अपहरण करती है। ऐसी अवस्था में शरत्-काल की चन्द्रिका में निरर्थक ही क्यों मेरी मदनेच्छा को शिथिल करती हो? इस प्रकार की वाणी बोलकर भगवान् ज्यों ही आशान्वित होकर शीघ्र अपनी प्रेयसी के आलिङ्गन में तत्पर होते हैं त्यों ही भक्तों की पीड़ा के कारण उनकी रक्षा के लिए उत्पन्न उत्साह से परिघ के समान अपनी भुजाओं को तिरछी कर लेते हैं। ऐसे केशी का विनाश करने वाले भगवान् हम लोगों की रक्षा करें॥३॥

**घर्माम्बुक्लिन्नकान्तं स्मितनतवदनं वारुणीपानलोलं**
**बिभ्रद् गोपाङ्गनानां निचयपरिवृतोऽनागतां यो हलेन।**
**कालिन्दीमाचकर्ष द्विविदमविनयं पीडयन् यश्च दोर्भ्यां**
**भीतान् हृष्टाँश्चकारावतु स च सततं लाङ्गली नो भयेभ्यः॥४॥**

### सहृदयहृदयप्रकाशः

श्रीकृष्णाग्रजं बलं स्तौति घर्मेति। लाङ्गली हलधरः नःअस्मान् भयेभ्यः ऐक्यादर्शनेन मोहाक्रान्तत्वात् विविधभयेभ्यः सततम् अवतु रक्षत्वित्यनेनान्वयः। किं कुर्वन् लाङ्गलीत्याह—घर्माम्बुक्लिन्नकान्तमिति, घर्माम्बुना स्वेदसीकरैः क्लिन्नं सिक्तम् अत एव कान्तं मनोहरम्, स्मितेन नम्रं मुखं पुनः वारुणीपानेन लोलं चञ्चलं बिभ्रत् दधत्। अत्र बलस्य मुखं स्वाभाविककान्तियुतमपि स्वेदसीकरसिक्तत्वादतीव मनोहरं भवति। रम्याणां विकारस्यापि शोभाहेतुत्वात्। यथोक्तं महाकविना भारविणा—'रम्याणां विकृतिरपि श्रियं तनोति' इति। त्रैवर्णिकानां कृते पैष्टिकसुरायाः प्रतिषेधेऽपि क्षत्रियाणां वारुण्यादिसुरापानस्याचारप्राप्तत्वाद् भगवति वारुणीस्वीकरणस्यादोषत्वमेवावगन्तव्यम्। तदीयवदनस्य स्मितनतत्वलोलत्व-

विशेषणोक्त्या तस्य प्रपन्नविषये सर्वदा प्रसादातिशयतापि लभ्यते। पुनश्च यः गोपाङ्गनानां समुदायैः परिवृतः परिवेष्टितः सन् अनागतां कालिन्दीं तदहङ्कारसमुच्छेदायैव हलेन आचकर्ष तथा दोर्भ्यां बाहुभ्यां विनयाचारपरम्पराविमुखं द्विविदनामकं वानरं पीडयन् तदाक्रान्त्या भीतान् जनान् हृष्टान् हर्षनिर्भरमानसान् चकार स लाङ्गली अवतु। अत्र बाहूभ्यां द्विविदपीडनं प्रपन्नहृदयाह्लादजननञ्च युगपदेव सम्पाद्यते। एतेन समुच्चयालङ्कारोऽप्यस्ति। द्विविदपीडने तस्य विनयराहित्यमेव हेतुर्न तु भगवतस्तस्मिन् शत्रुभाव इति अजातशत्रुत्वमेव सर्वदा बलस्यास्तीति विभावनीयम्।।४।।

भाषानुवाद

इस श्लोक से श्रीबलभद्र की स्तुति की गयी है। स्वेदसीकर से गीले मनोहर और मन्दहास से युक्त विनम्र तथा वारुणी (मदिरा) के पान से चञ्चल मुख को धारण करने वाले एवम् गोपसुन्दरियों के समुदाय से घिरे हुए जो आह्वान करने पर भी न आने वाली कालिन्दी को अपने हल से खींच लिए थे वे भगवान् हलधर हम लोगों की भय से निरन्तर रक्षा करें। महाबलशाली विनयशून्य द्विविद नामक वानर को अपनी भुजाओं के मध्य में दबाकर भयग्रस्त प्रपन्नों को उन्होंने प्रसन्न कर दिया था। इस प्रकार उनकी प्रपन्नत्राणपरायणता प्रसिद्ध ही है।।४।।

नवेन्दुसितकौमुदीप्रसरपुञ्जलेखोल्लस-
त्तरङ्गसुरनिम्नगामृदुतमा हिमानी हृदि।
चकास्तु सततं मुदा स्फुरति यत्र लोकोत्तरा
सलीलमिव चेतना ललितलोलमेघच्छविः।।५।।

सहृदयहृदयप्रकाशः

साम्प्रतं दिव्यतनुं श्रीकृष्णस्य प्राणवल्लभां राधिकां स्तौति नवेन्द्विति। हिमानी हिमसंहति हृदि चकास्तु विलसतु

इत्यनेनान्वय:।अत्र वैशद्यनैर्मल्यरूपया हिमान्या राधा निगीर्यत इति निगीर्याध्यवसानरूपातिशयोक्ति:। कथंभूता हिमानीत्याह—नवेन्द्विति। नवस्य नूतनस्य न तु प्रतिपक्षमवलोक्यमानस्य पुराणस्य, इन्दोश्चन्द्रस्य या सिता विशदा चासौ कौमुदी चन्द्रिका तस्या या प्रसरपुञ्जलेखा विस्तारसमूहच्छटा तया उल्लसन् तरङ्गो यस्या: सा चासौ सुरनिम्नगा स्वर्णदी भगवती गङ्गा, तथाविधगङ्गेव मृदुतमा स्वाभाविकम्रदिमगुणसम्पन्नेत्यर्थ:। अत्रोपमानानि समान्यवचनै:, घन इव श्याम: घनश्याम इतिवत् समास:। पुन: कथम्भूता हिमानीत्याह सततमिति। सर्वदा यत्र मुदा हर्षेणोपलक्षिता लोकोत्तरा लालित्यलौल्यगुणविशिष्टमेघकान्तिश्चेतना इव सलीलं यथा स्यात्तथा स्फुरति। अत्रापि मेघच्छविरित्यनेन भगवान् माधवो निगीर्यते।अत्रापि सैवातिशयोक्ति:। राधाविग्रहे श्रीकृष्णमूर्तिश्चेतनेव सलीलं स्फुरतीत्यनेन तयोरभेद एव प्रतिपाद्यते। राधां विना श्रीकृष्ण: श्रीकृष्णं विना राधा च नैव पूर्णता लभते। पूर्वविशेषणे सुरनिम्नगायां नूतनचन्द्रिकाप्रसारपुञ्जलेखाद्वारा तरङ्गोल्लासस्य प्रतिपादनात् तदीयमार्दवतुल्यतया भगवत्यां राधायाम् असाधारणवैशद्य-परमपावनत्वसंसारदावानलसमुत्पन्नतापत्रयसमुच्छेदनक्षमशैत्यादिकं ध्वन्यते। किञ्च सुरनिम्नगायां श्रीकृष्णच्छायाया अभावात् राधिकायाञ्च तत्सत्त्वात् व्यतिरेकालङ्कारोऽपि ध्वन्यते। भावध्वनिस्तु अस्त्येवेति दिक्॥५॥

### भाषानुवाद

अब दिव्यविग्रहा श्रीराधिका की स्तुति करते हैं। हिमानी अर्थात् हिमसंहति हमारे हृदय में सुशोभित हो जो नूतन चन्द्रमा की स्वच्छ चन्द्रिका की प्रसार-पुञ्जलेखा से उपलक्षित उछलती हुई तरङ्गों वाली गङ्गा के समान अत्यन्त मृदु है। यहाँ 'हिमानी' पद से भगवती श्रीराधा का अभिन्नत्वरूप से प्रतिपादन है। वह हिमानी अद्भुत है क्योंकि उसमें निरन्तर वह अलौकिक, ललित विलासों से चञ्चल

मेघ की कान्ति चेतना के समान मानों क्रीडा करती हुई स्फुरित होती रहती है। मेघकान्ति से यहाँ भगवान् श्रीकृष्ण का वह शास्त्रैकगम्य दिव्य आकार प्रतिपादित है। अतिशयोक्ति, उपमा, उत्प्रेक्षा, व्यतिरेक आदि अलङ्कार यहाँ आकलनीय हैं॥५॥

**विलासरसमाधुरी स्मितमनोहरा चातुरी**
**मनोजसुषमाद्रवैर्लसितपादचित्रावली।**
**नवेव च सुकोमला भणितिरभ्रलोला गतिः**
**सदाऽस्तु तव माधव! प्रियतमेव चित्ते मम।।६।।**

**सहृदयहृदयप्रकाशः**

स्वीयमानसे यथा प्रपञ्चसद्भावनिरासो भवेत् तथा भगवत्तत्-सबन्धिगुणगणानामवस्थितिं प्रार्थयते—विलासेति। हे माधव! तव विलासरसमाधुरी, विलासः गोपाङ्गनाभिः सार्धं विहितः क्रीडादिविन्यास एव परमनिर्वृतिहेतुतया रसः, तस्य माधुरी लोकोत्तरमाधुर्य्यगुणस्तथा स्मितेन मनांसि हरति चोरयतीति स्मितमनोहरा चातुरी यशोदादिगोपवनिता उद्दिश्य विहितं रहस्यगोपनपूर्वकप्रकारान्तरोद्भावनरूपं चातुर्यम्, एवम् मनोजस्य कामस्य या सुषमा, तस्य द्रवा लावण्यरागास्तैर्लसिता पादयोश्चित्रावली, अपि च प्रतिक्षणं नूतना इव प्रतीयमाना भणितिर्वाणी तथा अभ्रमिव मेघ इव लोला गतिर्गमनम् मम चित्ते सदा प्रियतमेव अस्तु। यथा लावण्यसंभारसंपत्समुपेता प्रियतमा कामिनश्चित्ते अन्यविषयसद्भावनिरसनपूर्वकं विराजते तथैव तव एतानि वस्तूनि मम चित्ते सन्तु! अन्या काचित् कामिनी न ममाभीष्टा पर्यन्तविरसत्वाद् भङ्गिसंगमत्वाच्च, अपि तु लोकोत्तरा सर्वकाले एकरसघना नित्या तवैव गुणसम्पदिति व्यतिरेकालङ्कारो ध्वन्यते। द्वितीये पादे भगवतश्चरणचित्रावल्या मनोजसौन्दर्यद्रवैर्लसितत्वोक्त्या

सकलसुषमासंभारसमुपेतत्वेन प्रसिद्धो मदनो माधवस्य चरणसेवायां कैङ्कर्यमङ्गीकरोतीति वस्त्वपि ध्वन्यते।।६।।

**भाषानुवाद**

हे माधव! गोपिकाओं के साथ आपके विलासरस की मधुरिमा, मन्दहास से मनोहर लगने वाली आपकी चतुरता, कामदेव की शोभा के लावण्यरागों से सुशोभित आपके चरणों की चित्रपरम्परा, नित नूतन जैसी लगने वाली कोमल आपकी वाणी और मेघ की तरह चञ्चल आपकी गति, ये सभी मेरे चित्त में प्रियतमा के समान निवास करें।।६।।

**निसर्गललितस्मितं विकचनेत्रनीलोत्पलं**
**नवीनदशनावलि स्फुरितचारुबिम्बाधरम्।**
**निकुञ्जमसृणोदरे दरनतञ्च राधामुखं**
**सहासमवलोकयन् जयति नन्दसूनुश्चिरम्।।७।।**

**सहृदयहृदयप्रकाशः**

राधामाधवयोर्लोकोत्तरां सहृदयहृदयदर्पणे परनिर्वृतिस्थापिकां प्रियताभूमिं प्रकटयन्नाह—निसर्गेति। निकुञ्जस्य लतागृहस्य मसृणोदरे सरसमध्यभागे राधामुखं सहासं यथा स्यात् तथा अवलोकयन् नन्दस्य सूनुर्भगवान् श्रीकृष्णः चिरम् यावत्पर्यन्तं सर्गसत्त्वं तावत्-पर्यन्तमित्यर्थः। जयति लोकोत्तरां स्थितिं लभते, अत एव चराचरात्मकजगद्भिर्वन्दनीयो भगवानिति अवगम्यते। अत्र निकुञ्जमसृणोदर इति स्थानकथनात् तयोरेकान्तलाभस्तदानीमिति लभ्यते। सहासमिति अवलोकनविशेषणात् भवति तदीयमानसे मदनाविर्भाव इति सूच्यते। कथमिव राधामुखमिति मुखविशेषणा-न्येवाह—निसर्गेत्यादिना। निसर्गललितम् स्वाभाविकलालित्यगुणयुतं स्मितं स्मेरहासो यत्र तथाभूतम्, पुनश्च विकचे विकासयुते नेत्रे नीलोत्पले इव नीलकमले इव यत्र तथाभूतम्, पुनश्च नवीना न तु

पुराणत्वेन विरसा दशनावली दन्तानां पङ्क्तिर्यत्र तथाभूतम्, पुनश्च स्फुरितश्चारुबिम्बाधरो यत्र तथाभूतम्, अपि च, दरनतम्, ईषदवनतम्। अत्र दरनतमिति ईषदवनतिप्रकटनेन राधाया अपि चेतसि अस्ति तरां मदनाङ्कुरविकास इति प्रकाश्यते। एतेन शृङ्गारविषयकमौचित्यमेव संपाद्यते। राधामाधवयोः प्रेम्णि नास्ति अनौचित्यलेशसंभावनापीति विभावनीयम्। अतो न रसभङ्गः, किन्तु रसपरिपोष एव। यथा—हुराचार्या 'औचित्योपनिबन्धस्तु रसस्योपनिषत् परा' इति। एवमेव तदीयस्मिते निसर्गलालित्येन कृत्रिमता निराक्रियते। नेत्रनीलोत्पलयो र्विकचत्वेन राधाया अपि साश्चर्यमाधवमाधुरीविलोकनव्यापारवत्ताऽस्तीति प्रकाश्यते। दशनपङ्क्तौ नूतनत्वन्तथा तस्या मुखरामणीयकनवीनावस्थादिकत्वं व्यनक्ति। बिम्बाधरे स्फुरितत्वकथनाद् भगवता सह वार्तां विधातुमिच्छती अपि त्रपापारवश्यात् न किमपि ब्रवीतीति ध्वन्यते। एतेन तयोरन्योन्यव्यतिकरो नर्मविषये प्रथमभावीत्याकलनीयमिति दिक्॥७॥

### भाषानुवाद

भगवान् श्रीकृष्ण की स्तुति करते हैं। निकुञ्ज अर्थात् लताओं के झुरमुटों में थोड़े झुके हुए श्रीराधाजी के मुख को हँसी के साथ देखते हुए नन्द के पुत्र सर्वोत्कृष्ट होकर सदा प्रणम्य रहें। आदितः दो पादों से श्रीराधिका जी के मुख के विशेषण ही कहे गये हैं जो शृङ्गारानुभावों की ही अभिव्यञ्जना करते हैं। स्वाभाविक लालित्यगुणों से युक्त मन्दहास हो जिसमें, ऐसा है मुख। एवञ्च नीलकमलों की भाँति नेत्रों वाले, नूतन दाँतों की श्रेणी से युक्त तथा फुरफुराते लाल बिम्ब के समान अधर से युक्त। ऐसे मुख का निरीक्षण भगवान् सहास कर रहे हैं। इस प्रकार यहाँ श्रीराधिका और श्रीकृष्ण का पारस्परिक अनुराग द्योतित किया गया है॥७॥

पूर्वं वृन्दावनं तत् सुललितयमुनास्निग्धरम्यञ्च यत्र
प्रीत्या राधामुरार्योरिव गुणगुणिनोरेकताऽभूच्च पश्चात्।
रोमाञ्चोद्भासि कायं नवमृदुहसितक्षालिते सृक्विणी च
स्वेदप्रालेयबिन्दून् नलिनमिव तयोः कम्रवक्त्रं स्मरामि।।८।।

सहृदयहृदयप्रकाशः

श्रीराधामाधवयो र्लीलाविलासनिकेतनं वृन्दावनन्तथा तयोः शृगारस्थायिभावरतिकार्याणि तदीयनित्यलीलाविहारार्थमेव स्मरन्नाह—पूर्वमिति। स्मरामीति। किम्? इत्याह—पूर्वं तत् श्रीकृष्णेन सनाथीकृतत्वात् सर्वसौभाग्यप्रदातृ वृन्दावनम्, वृन्दा हरिसर्वस्वभूता तस्य तस्यामतीवानुरक्तत्त्वात्, तासां वनम्। कथम्भूतं तदस्तीत्याह—सुललितयमुनास्निग्धरम्यमिति, सुललिता सुमनोहरा अथवा सुष्ठुललितानि गोपाङ्गनानां श्रीकृष्णं प्रति रतिचेष्टितानि यस्यां सा सुललिता, सा चासौ यमुना कलिन्दगिरिनन्दिनी तया स्निग्धं सरसम्। अत एव रम्यम् रमणीयम्। पुनः कथभूतम्? आह—यत्र वृन्दावने प्रीत्या विशुद्धेन प्रेम्णा तयो र्लोकवत् वासनाद्यभावात्, एतेन सामान्यनायकरत्यपेक्षया श्रीराधामाधवयो रतिवैलक्षण्याद् व्यतिरेकोऽपि बोध्यः, राधामुरार्योः सर्वथा अभिन्नयोरपि प्रपन्नार्थलीलासंपादनाय पृथग्विग्रहयोः गुणगुणिनोरिव एकताऽभूत्, तादात्म्यम् प्रपन्नहृदयदर्पणे गोचरीभूतम्। एवम् ऐक्ये संजाते पश्चाद् भावि किं स्मृतिगोचरीभूतमित्याह—तयो रोमाञ्चोद्भासि कायम् इति। रोमाञ्चोद्भासित्वञ्चानन्दातिरेकात्। कायमित्येकवचनेन विग्रहयोरैक्यमेव प्रकाश्यते। पुनःकिमित्याह—नवेति। नवानि प्रतिक्षणं वैचित्र्यान्वितानि अपि च मृदूनि न तु विकृतानि हसितानि तैः क्षालिते सृक्विणी ओष्ठप्रान्तौ च। सृक्विशब्दो ह्रस्वेकारान्तः क्लीबोऽप्यस्ति प्रान्तावोष्ठस्य सृक्विणीतिक्लीबकाण्डे अमरदत्तः। अत्र लोकोत्तरहासेनैव सृक्विप्रक्षालनं न जलादिनेति हसितानां

नवमृदुत्वोक्त्यानुच्छिष्टत्वप्रतिपादनादेव ध्वन्यत इति न विस्मर्तव्यम्। पुनश्च स्वेदप्रालेयबिन्दून् स्वेदा रतेः कार्यभूताः एवातीव स्वच्छत्वात् प्रोलेयबिन्दवस्तान्। पुनश्च नलिनमिव कमनीयं हरिहरादिभिरपि सर्वकाले अभिलषणीयं मुख्यम्। अत्र शृङ्गारस्य कविनिष्ठभगवद्-विषयकरतौ अङ्गत्वात् गुणीभूतव्यङ्ग्यतैव। यथाहुराचार्याः—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः। इति। स्रग्धरावृत्तम्॥८॥

### भाषानुवाद

अत्यधिक मनोहर यमुना से सरस और रमणीय उस वृन्दावन का स्मरण पहले करता हूँ जहाँ अन्योन्यानुराग के कारण श्रीराधा और श्रीकृष्ण की एकता गुण और गुणी के समान हुई। जैसे द्रव्य अपने गुणों के साथ ही प्रकट होते हैं (मीमांसासिद्धान्त के अनुसार) वैसे ही भगवान् श्रीकृष्ण वृन्दावन में श्रीराधिका के साथ ही होते हैं, यह अभिप्राय हैं। इस प्रकार वृन्दावन के स्मरण के बाद उस दिव्य युगल के रोमाञ्चित शरीर, नूतन-मसृण हासों से प्रक्षालित ओष्ठों के किनारों तथा उनके शरीर में विद्यमान स्वेदबिन्दओं और कमल के समान कमनीय मुख का स्मरण करता हूँ॥८॥

**लावण्यपूरतरला तरलायताक्षी**
**राधा तवाङ्ककलिता लतिकेव कृष्ण!**
**नीलाम्बरे प्रसृतचञ्चलचन्द्रिकायाः**
**कायाङ्गकान्तिकलिकामधरीकरोति।।९।।**

### सहृदयहृदयप्रकाशः

श्रीकृष्णेनाश्लिष्टाया राधायाः का शोभेत्याह—लावण्येति। हे कृष्ण! लावण्यप्रवाहेण तरला प्रतिक्षणनूतनत्वसंपादिका आभा तरलता तदवच्छिना चञ्चला च। लावण्येन तरलत्वमेवानुभूयते, यथोक्तम्—मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु

तल्लावण्यमिहोच्यते। इति। नूतनत्वसम्पदुक्ता श्रीमाघेन। यथा 'प्रतिक्षणं यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति। पुनश्च तरलायताक्षी तरले आयते विस्तृते च अक्षिणी यस्याः तथाभूता राधा। अत्र लोचनयोस्तरलत्वस्यायतत्वस्य च प्रतिपादनात् राधायाः श्रीकृष्णविग्रहे तृप्तिराहित्यमेव प्रकाश्यते; एतेन च भगवतो बुद्धिविषयादपि अत्यन्तदूरवर्तिनी कान्तिरिति ध्वन्यते। तथा चाह— श्रुतिरपि—'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह'। इति। सा तव अङ्के कलिता धृता। कथमिव? आह—लतिकेव। लतिका यथा अभिन्नत्वेनैव वृक्षेण गृह्यते तद्वदेव। एवं श्रीकृष्णस्य श्यामविग्रहे राधायाश्च धवले सति, पुनस्तयोरेकत्रावस्थाने लोकोत्तरच्छटा सम्पद्यते। एतदेवाह पादद्वयेन नीलाम्बरे इति। नीलाकाशे विस्तृतचञ्चलचन्द्रिकायाः या कायाङ्गकान्तिस्तस्या या कलिका अथवा कायाङ्गकान्तिरेव कलिका तामधरीकरोति तिरस्करोति। अत्र व्यतिरेकालङ्कारः। वसन्ततिलकावृत्तम्।।९।।

### भाषानुवाद

हे कृष्ण! लावण्य के प्रवाहों से चञ्चल एवम् चञ्चल-विस्तृत नयनों वाली राधिकाजी को आप जब अपने अङ्कों में लता के समान धारण कर लेते हैं तब वे नीले आकाश में फैली हुई चञ्चल चाँदनी के शरीरावयवों की कान्तिकली को फीकी कर देती हैं। तात्पर्य यह है कि भगवान् की श्याम कान्ति में जब भगवती श्रीराधिका की धवल कान्ति का संमिश्रण होता है तो आकाश में विद्यमान चाँदनी भी फीकी फड़ जाती है। व्यतिरेक-अलङ्कार।।९।।

**राधा तारा तव तरलतातायिनीताङ्कपीठे**
**बिब्बौकैर्यद् वितरति हि सा कामपि प्रीतिधाराम्।**
**रोमाञ्चाक्तस्त्वमपि भगवन्! नूनमच्छस्मितैस्तैः**
**काये तस्या नवसुमनसां मालिकां संतनोषि।।१०।।**

## सहृदयहृदयप्रकाशः

पुनः श्रीराधामाधवयोरनुरागमेव प्रकटयन्नाह—राधेति। हे भगवन्! तव अङ्कमेव पीठम् तस्मिन् इता प्रेमातिशयवशाद् विश्वासभूमिं प्राप्य स्वयमेव गता राधा तारा, समुद्भासिरूपत्वात् नक्षत्रलेखेत्यर्थः। कथम्भूतेऽङ्कपीठे इत्याह तरलतातायिनीति। चञ्चलताया विस्तारविधायिनि। सकलरमणीनां तत्राभिलाषाधिक्यात्तथोक्तिः। कथं सा तथेत्याह—बिब्बौकैरिति। यदित्यव्ययं हेत्वर्थम्। यस्मात् कारणात् सा विलासैः कामपि लोकोत्तरामनुभवैकगोचरां प्रीतिधारां संमदरसप्रवाहं वितरति। एवं प्रीतिसम्पदमधिगत्य त्वमपि कृतज्ञ एवासि किञ्चिल्लोकोत्तर-वस्तुप्रदानेनेत्याह—रोमाञ्चेति। रोमाञ्चेन लिप्तगात्रः सन् त्वमपि तैरनुभवैकगोचरै र्लोकोत्तरैरेव रम्यस्मितैस्तस्याः शरीरे नूतनपुष्पमालिकां सन्तनोषि। एवमन्योन्यं स्वीयोपकरणैरेव तयोरुपकार्योपकारकभावः, न बाह्यसामग्रीणामपेक्षेति ध्वन्यते। अत्र परिवृत्तिरलङ्कारः 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैरिति लक्षणात्। अत्र समेन समस्य विनिमयः। यथोदाहृतं प्राकशेऽपि—लतानामेतासामुदितकुसुमानां मरुदयं मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् इति। मन्द्राक्रान्ता-वृत्तम्।।१०।।

## भाषानुवाद

हे भगवन्! तुम्हारे चाञ्चल्यपूर्ण अङ्क में गयी हुई राधिका तारा ही है क्योंकि वह अपने विलासों से किसी अद्भुत प्रीतिधारा अर्थात् आनन्दप्रवाह को प्रदान करती है। यदि ऐसी बात है तो आप भी रोमाञ्चित हुए अपने सुन्दर मन्द हासों के द्वारा उनके शरीर में नित नयी फूलों की माला का विस्तार करते हो।।१०।।

**कान्तिः कृष्णा विशदकिरणा ते तनौ कृष्ण! कस्मा-**
**ज्जाता यस्या उपचितरसा निःसरन्तीति राधा।**

उक्त्वा कृत्वा स्मितमतितरां प्रेक्षते कान्तवक्त्रं
ताम्रस्निग्धैर्हरितकपिशै रागि चन्द्रार्कबिम्बम्।।११।।

मौग्ध्यान्मुक्ताकरविलसितो माधवोऽपि प्रियायाः
काये लग्नो ललितलपनं व्याजहार स्मितेभ्यः।
आयाता मे तव विशदता श्यामताऽहो तथैव
सूक्ष्मप्रायादलकविसरात् सारदा हि प्रियेति।।१२।।

(युग्मकम्)

**सहृदयहृदयप्रकाशः**

पुनर्ललितविलासप्रसङ्गे तयो वैदग्ध्यवचःप्रयोगमाह युग्मकेन कान्तिरिति। राधा श्रीकृष्णस्य परमप्रेमास्पदीभूता उक्त्वा तथा अतितरां स्मितं मन्दहासं कृत्वा कान्तस्य वक्त्रं मुखं प्रेक्षते प्रकषेण ईक्षते किं कथयिष्यतीति उत्कण्ठातिशयादेव। किमुक्त्वेति—आह—कान्तिरिति। हे कृष्ण! ते तनौ शरीरे विशदा अतिस्वच्छाः किरणा अंशवो यासु तथाभूता पुनश्च कृष्णा श्यामा कान्तिश्छाया कस्माज्जाता, कृष्णतनौ कृष्णैव कान्तिरुचिता किन्तु सा विशदकिरणाऽस्तीति सन्देहात् प्रश्नः। अपि च यस्याः कान्तेरुपचितरसाः परां पुष्टिमुपगताः लोकोत्तरैकह्लादमात्रप्रचुराः रसा अपि निःसरन्ति इति वैलक्षण्यमेव भाति। कीदृशं प्रेक्षत इत्याह—ताम्रेति। ताम्रैश्च तैः स्निग्धैस्ताम्रस्निग्धै रक्तसरसैरित्यर्थः। पुनश्च हरितकपिशैः वर्णै रागि विचित्ररागरञ्जितम् तथा चन्द्रार्कयो र्बिम्बो यत्र तथाभूतम्। अत्र चन्द्रसूर्यबिम्बाभ्यां भगवतो नयने निगीर्येत इति निगीर्याध्यवसानरूपातिशयोक्तिः। तस्य नेत्रयोः सूर्यचन्द्रयो-र्बिम्बात्मकत्वेन प्रतिपादनात्। एवं भगवान् किमुक्तवानित्याह—मौध्येति। माधवोऽपि मुक्तानां जीवन्मुक्तानामाकरैर्विलसितः सेवित इत्यर्थः, अथवा मुक्तामालानां करैः किरणैर्विलसितः विशेषेण लसितः शोभितः सन् प्रियायाः काये लग्नः संलग्नः ललितानि

वैचित्र्यान्वितानि लपनानि वचनानि यत्र तद् यथा स्यात् तथा व्याजहार—अहो इति हर्षातिशये। तव स्मितेभ्य:, तेषामतीव विशदत्वात् विशदता आयाता तथैव सूक्ष्मप्रायात् अलकविसरात् विस्तृतकेशकलापात् तेषामतीव श्यामत्वात् श्यामता आयाता। कथमित्यर्थान्तरेण न्यस्यति सारदा हि प्रियेति। यतोहि प्रिया प्रेयसी सारदैव सारं सारतत्त्वं प्रियाय ददातीति व्युत्पत्त्या भवति। इत्थं यदस्ति मयि लोकोत्तरशोभाविधायि वस्तु तत् तवैव सम्पन्न्यासरूपेण मयि तिष्ठतीति न ममास्ति किञ्चिदिति चाटूवतिशयो भगवत: शृङ्गारमेव पुष्यति परम्। अत्रार्थान्तर-न्यासालङ्कार:, सामान्यं वा विशेषो वा तदन्येन समर्थ्यते। यत्र सोऽर्थान्तरन्यास: साधर्म्येणेतरेण वेति लक्षणात्। मन्दाक्रान्ता-वृत्तम्।।११-१२।।

### भाषानुवाद

हे कृष्ण! आपके शरीर में स्वच्छ किरणों वाली काली कान्ति कहाँ से उत्पन्न हुई जिससे परिपुष्ट रसों का क्षरण हो रहा है? इस प्रकार से कह कर और मुस्करा कर श्री राधाजी अपने कान्त का मुख देखने लगती हैं जो रक्त और स्निग्ध (सरस) एवम् हरित-पीत वर्णों वाले रागों से अनुरञ्जित है तथा जिसमें सूर्य और चन्द्र के बिम्ब भी विद्यमान हैं। अपनी प्रेयसी की उस मुग्धता से अनुप्राणित होकर मौक्तिकमाला की किरणों से सुशोभित होते हुए माधव ने भी उत्तर दिया कि हमारे शरीर में आप के मन्दहासों से श्वेत आभा आयी है तथा अतीव सूक्ष्म केशकलापों से श्यामता भी प्राप्त हुई है। तात्पर्य यही है कि जो कुछ भी भगवान् के पास है वह श्री राधिका का कृपाप्रसाद ही है क्योंकि प्रिया सारवस्तु प्रदान करने वाली होती है।।११-१२।।

**श्यामा मूर्तिर्विधिहरकरैर्वन्दितस्यान्यरूपा**
**यस्यां मुक्तामणितरलता तानतेन्दीवरस्य।**

लोकातीताधरकिसलयप्राप्तशोणच्छविश्च
ताम्रस्निग्धस्तनयुगलसद्राधिकाकञ्चुकीव।।१३।।

**सहृदयहृदयप्रकाशः**

पुनर्ललितविलासप्रसङ्गे श्रीकृष्णच्छविमेव वर्णयति श्यामेति। विधिहरकरैर्वन्दितस्य श्रीकृष्णस्य श्यामत्वगुणविशिष्टा मूर्तिस्तनूरन्यरूपैवास्ति। अन्यत् सामान्यधर्मानाक्रान्तं लोकोत्तरवैलक्षण्ययुतं रूपं यस्यास्तथाभूतेत्यर्थः। यस्यां मूर्तौ मुक्तामणेस्तरलत्वरूपाच्छाया तथा इन्दीवरस्य नीलकमलस्य तानता विस्तारोऽस्ति। अत्रेन्दीवरेण तन्नेत्रयुगलं निगीर्यते, तेन निगीर्याध्यवसानरूपाऽतिशयोक्तिः। अन्यरूपेत्यत्र वस्त्वन्यत्वप्रतिपादनरूपा सैव। अपि चापरं वैलक्षण्यमाह—लोकेति। लोकानप्यतीतो लोकोत्तरो योऽधर एव किसलयःपल्लवस्तस्मात् प्राप्ता शोणा चासौ छविर्यया तथाभूता। इत्थं मूर्तेः स्वाभाविकश्यामत्वन्तथा तत्र मुक्तामणितरलत्ववैशद्यप्रसार इन्दीवरस्य नीलत्वन्तथा च शोणिमरागयुक्ताधरपल्लवस्य रक्तप्रभा चकास्ति। एवं कल्पनातीते वपुषि किमस्ति अन्यदीयलौकिकवस्तुसाधर्म्यम्? नास्तीति ब्रूमः। यद्यस्ति तर्हि भगवतः कलाविलास एव। एतदेवाह—ताम्रेति। ताम्रं रक्ताभम्, अपि च स्निग्धमतीवललितत्वात् सरसं यदस्ति स्तनयुगलम्, तेन लसन्ती या राधिकाया भगवदभिन्नस्वरूपायास्तदीयकलाविलासरूपायाः कञ्चुकी, सेव भाति। राधिकाकञ्चुक्यामपि मुक्तामणितरलत्वं स्तनयोः शोणाभत्वन्तथा तदीयस्वाभाविकनीलस्वच्छच्छायत्वमस्तीति युक्तमेवास्ति भगवतस्तनूसाधर्म्यमित्याकूतम्।।१३।।

**भाषानुवाद**

ब्रह्मा और शिव के करकमलों के द्वारा वन्दित भगवान् श्रीकृष्ण की श्यामवर्ण की आकृति अन्य प्रकार की ही है जिसमें मुक्तामणि की तरलता (चाञ्चल्य), नीलकमलों का विस्तार तथा लोकोत्तर

अधर-किसलय (पल्लव) से प्राप्त लाल वर्ण की छवि भी विद्यमान है। इस प्रकार भगवान् का वह शरीर ताम्र (रक्त) और मसृण स्तनयुगल से सुशोभित श्रीराधिका की कञ्चुकी जैसा ही है॥१३॥

**स्निग्धाम्बुपूरकणसिक्तसमीरमञ्जु-**
**कुञ्जानि भृङ्गरवमुद्रितदिङ्मुखानि।**
**तानि प्रकीर्णसुरभीणि जयन्ति कृष्ण-**
**क्रीडापराणि यमुनासरितस्तटानि।।१४।।**

### सहृदयहृदयप्रकाशः

अवसरप्राप्तलीलाविहरणस्थलीमाह स्निग्धेति। यमुनासरितस्तटानि जयन्ति त्रिभुवनाकर्षणकेन्द्रबिन्दुतया सर्वोत्कर्षेण वर्तन्ते। कथम्भूतानि तानीत्याह—स्निग्धोदकप्रवाहकणैः सिक्ता ये समीरा स्तेन मञ्जुकुञ्जानि मनोहरलतासदनानि यत्र तथाभूतानि। पुनः कीदृशानीत्याह भृङ्गेति, भ्रमराणां रवै गुंञ्जारै र्मुद्रितानि पूरितानि दिशां मुखानि यत्र तथाविधानि। अत्र भृङ्गबाहुल्येन लतानां विकचप्रसूनशालित्वं ध्वन्यते। अत एवाह प्रकीर्णसुरभीणि। प्रकीर्णाः सुरभयो गन्धा यत्र तथाभूतानि। तानि लोकोत्तराणीत्यर्थः। पुनः कथम्भूतानि इत्याह—कृष्णक्रीडापराणि इति। कृष्णस्य क्रीडैव परा प्रकृष्टा यत्र तथाभूतानि। अहो कृतकृत्यता सारैकग्राहिता तटानां यत्र श्रीकृष्णक्रीडातिरिक्तमबहुमानमिति। एतेन यत्र जडानामप्येवं स्थितिस्तत्र का कथा चेतनानामिति वस्त्वपि ध्वन्यते॥१४॥

### भाषानुवाद

यमुनाजी के वे तट तीनों भुवनों में सर्वोपरि हैं, अत एव प्रणम्य हैं। उन तटों में विद्यमान लताओं के झुरमुट सरस जलकणों से संसिक्त पवनों के बहने से अत्यन्त मनोहर हो गये हैं तथा वहाँ कि दिशायें भौरों की गुञ्जार से परिपूर्ण रहती हैं एवम् वहाँ नाना

प्रकार की सुगन्ध हैं और श्रीकृष्ण की क्रीडा की ही वहाँ प्रधानता रहती है॥१४॥

नानासुगन्धिमृदुपद्मपरागपीत-
शोणप्रभालसितपल्लविनीविलासैः।
शय्या प्रियाकरकृता मसृणा मुरारेः
प्रक्रान्तनीलमणिकान्तिचयास्ति कापि॥१५॥

सहृदयहृदयप्रकाशः

लीलाप्रसङ्ग एव शय्यां वर्णयति नानेति। नानाविधसौरभ-सिक्तमृदुपद्मानां परागैः पीताः, ताश्च ताः शोणप्रभाभिः लसिताः पल्लविन्यः लताः। तासां विलासैः। अथवा तथाविधपरागैः पीता निगीर्णा शोणप्रभा रक्तप्रभा तया लसितपल्लविनीविलासैरुपलक्षिता, तथा च प्रियाया राधिकायाः कराभ्यां कृता निर्मिता, अत एव मसृणा तथा प्रक्रान्तः नीलमणीनां कान्तिसमूहो यस्यां तथाभूता कापि लोकोत्तरा शय्या अस्ति। अत्र शय्याया राधाकरसंपादनीयत्वादुत्कर्षः श्रीकृष्णचेतःकौतुकमपि ध्वन्यते। नीलमणिना श्रीकृष्णस्य निगीर्णत्वादतिशयोक्तिरलङ्कारः॥१५॥

भाषानुवाद

भगवान् की लीला के प्रसङ्ग में उनकी शय्या का वर्णन है। प्रियतमा श्रीराधिका जी के द्वारा बनायी गयी अत्यन्त कोमल श्रीकृष्ण की शय्या अद्भुत है। उसमें वह अद्भुतता नाना प्रकार की सुगन्ध वाली, मुलायम कमलों के परागों से पीली और रक्तकान्तियों से सुशोभित पल्लवों वाली लताओं के विलासों के कारण है। भगवान् के द्वारा सेवित होने के कारण वह वैसी जान पड़ती है जैसे उसमें नीलमणि की कान्ति आ गयी हो॥१५॥

सुधांशुप्रालेयस्फटिकघनसारच्छविचयै-
श्चमत्कारासारा रचितरचनाऽहो मुररिपोः।

स्मितज्योत्स्ना कृत्स्ना किमु च करुणायाःप्रतिकृति-
र्व्रजे राधाकारे विचरति मुदे स्वप्रणयिनाम्।।१६।।

सहृदयहृदयप्रकाशः

का राधा सा या श्रीकृष्णस्यापि कौतुकं विदधाति? इत्यपेक्षायामाह सुधांश्विति। सुधांशुश्चन्द्रः प्रालेयस्तुषारः स्फटिको विशदशिलाविशेषः घनसारः कर्पूरः, तेषां कान्तिसमूहै रचिता चासौ रचना चमत्कारवृष्टिः। अहो, इति हर्षातिशये। मुररिपोः श्रीकृष्णस्य कृत्स्ना सम्पूर्णा स्मितकौमुदी किं वा कारुण्यस्य प्रतिकृतिर्विग्रहः व्रजे राधाया आकारे विचरति। किमर्थमित्याह—स्वप्रणयिनामध्यात्मराग-वासितचेतसां मुदे प्रमोदाय। अत्र राधायाश्चमत्कारवृष्टि-श्रीकृष्णस्मितकौमुदीकारुण्यमूर्तिरूपत्वेन प्रतिपादने सर्वत्र राधिकानुरागिनिष्ठश्रेयउत्पादनशालित्वमेवायाति। उत्प्रेक्षासन्देहयोः संसृष्टिः।।१६।।

भाषानुवाद

व्रज में राधा के आकार के रूप में अपने भक्तों के प्रमोद के लिए चन्द्रमा, तुषार, स्फटिक और कर्पूर की कान्तियों के समुदाय से निर्मित वह रचना तो विचरण नहीं कर रही है जिससे चमत्कारों की वर्षा होती हो या वह भगवान् श्रीकृष्ण की सम्पूर्ण मन्दहासरूपी चन्द्रिका है किं वा वह करुणा की प्रतिमूर्ति है? सर्वथा वह रचना कृष्ण की मन्दहासचन्द्रिका या करुणा की प्रतिमूर्ति में से ही कोई एक हो सकती है जिसका निश्चय नहीं हो रहा है।।१६।।

कम्पितकामचापविशिखा प्रसृतसितकरा
सुस्मितजातिकुन्दविकचा जितरतिललिता।
कापि कलावती नवनवा व्रजभुवि जयति
यामुपगम्य नन्दतनयोऽपनयति तिमिरम्।।१७।।

सहृदयहृदयप्रकाशः

यामुपेत्य नन्दतनयोऽपि तिमिरं स्वदेहजन्यं कालिमानं मायां वा दूरीकरोति सा कापि लोकोत्तरा नवप्रकारा कलावती व्रजभुवि जयति सर्वोत्कर्षेण वर्तते। कथम्भूता सेत्याह—कम्पितकामचाप-विशिखेत्यादिना। कम्पितः अर्थात् परमप्रकाशरूपत्वाद् दूरादेव प्रक्षिप्तः कामो मदनस्तदीयश्चापः विशिखाश्च यया सा। एतेन तदीयचरणोपासकानां कामजन्या भीर्न स्यादिति ध्वन्यते। पुनश्च प्रसृतसितकरा परमश्रेयःप्रतिपादनाय प्रसृतौ सितौ करौ पाणी कराः किरणाश्च यया सा, एतेन तत्संपर्के अविद्यातमोराहित्यं सूच्यते। पुनश्च सुस्मितजातिकुन्दविकचा, सुन्दरस्मितान्येव जातिकुन्दसुमनो-विकसितानि यस्याः सा, एतेन तत्सेवकानां विषयपराङ्मुखत्वं ध्वन्यते; तेषां तदीयस्मितसम्पदं विहाय अन्यत्र मनोऽनयनात्। पुनश्च जितरतिललिता, जितानि रतेः कामपत्न्याः कामिनीनिष्ठप्रीतेश्च ललितानि रतिचेष्टितानि यया सा, अथवा जिते रति र्ललिता श्रीकृष्णसखी च यया सेति॥१७॥

भाषानुवाद

नित नूतन प्रकारों वाली कोई लोकातीत कलावती (चौसठों कलाओं वाली) व्रजभूमि में सर्वोत्कर्ष को प्राप्त हो रही है। अत एव उसके सामीप्य को प्राप्त करके नन्द के कुमार भी अपने अन्धकार को दूर कर रहे हैं। श्री राधिकाजी के सम्पर्क से भगवान् की श्यामता दूर हो रही है, यह अभिप्राय है, अथवा ईश्वर भी उसके साक्षात्कार से तिमिर (माया) से निवृत्त होकर अपने नित्य, शुद्ध, बुद्ध, प्रत्यक्स्वभाव में व्यवस्थित हो रहे हैं। वह कैसी है? कहते हैं—परमप्रकाशरूप होने के कारण काम, उसके धनुष और बाणों को दूर से ही किनारे कर देती है तथा परम श्रेय के सम्पादन के लिए अपने दोनों हाथों या किरणों को फैलाये रहती है और

मन्दहास रूपी जाति-कुन्द के फूलों का विकास जो करती रहती है एवम् रति के लालित्य को भी जीत ली है॥१७॥

**मुग्धा मनोजकुसुमेषुनविद्धसत्त्वा**
**तत्त्वज्ञकम्रमणं सुरते नताङ्गी**
**त्यक्तुं यथा न सहते भगवन्! तथैव**
**चेतो मम प्रणयहीनमहो प्रियं त्वाम्।।१८।।**

### सहृदयहृदयप्रकाशः

सम्प्रति स्वस्य भगवत्त्यागाक्षत्वमुच्यते मुग्धेति। मुग्धा रत्यनभिज्ञा, अत एव मन्मथसुमनःशिलीमुखैरच्छिन्नमानसा सुरते प्रियं यथा न त्यक्तुं पारयति तथैव हे प्रभो! प्रणयविधुरमपि मे चेतो त्वामिति। 'अहो' इत्यनेन भगवतः प्रभावातिशयो ध्वन्यते। प्रणयराहित्येऽपि मे चेतस्त्वां प्रियमेव मनुते। अत्र सहृदयचक्रवर्तिनः श्रीमदखण्डानन्दसरस्वतीपादाः प्रणयहीनमिति विशेषणं भगवत्पक्षेऽपि योजयन्ति। यद्यपि मम चेतसि प्रणयरसवैधुर्यमस्ति तथापि तत् प्रणयहीनमपि त्वां प्रियं मनुते इति। एतेन कदाचिदप्यहं न त्वया त्याज्य इति ध्वन्यते। प्रियस्तु मन्मथसर्वस्वभूत-सुरतसाराभिज्ञः कमनीयः रमणरसिकः सुरतकालेऽस्ति यत्प्रभावादेव मुग्धा किञ्चित्सञ्जातमन्मथपरिचयेवेति नताङ्गीपदेन ध्वन्यते। उपमाऽत्राङ्गिनं रसं परिपुष्णाति॥१८॥

### भाषानुवाद

यह कवि की उक्ति है। हे भगवन्। जैसे वह मुग्धा नायिका, जिसका अन्तःकरण काम के बाणों से विधा हुआ न हो, सुरत के प्रसङ्ग में विनम्र अङ्गों वाली होती हुई अपने उस पति को त्यागने में समर्थ नही होती जो मदनशास्त्र के तत्त्व को समझता है और कमनीय भी है, वैसे ही मेरा चित्त आपके वास्तविक प्रणय को

न जानता हुआ भी आप जैसे प्रियतम को त्यागने में समर्थ नहीं हो पाता॥१८॥

**पीयूषबिन्दुमभितः सरतः सुकाव्यात्**
**शास्त्रादुदन्वदतिदीर्घगभीरतत्त्वात्।**
**रामाविलासतटिनीप्रसरत्तरङ्गाद्**
**भक्तौ प्रमोदमधिकं लभते मनो मे।।१९।।**

**सहृदयहृदयप्रकाशः**

भक्तेः परमपुरुषार्थत्वप्रतिपादनायैव निर्मितमेतत्। काव्याद् ब्रह्मानन्दसहोदररसावाप्तिः शास्त्राच्च ब्रह्मप्राप्तिस्तथा वनितानीविमोक्षमोक्षवादिनां तदीयोपभोग एव परनिर्वृतिहेतुरिति। यद्यपि तत्र तत्र मे मनो मोदं लभते वासनामयत्वात्तस्य तथापि भक्तौ प्रकृष्टमोदाधिक्यमिति तस्या एवातिशयः॥१९॥

**भाषानुवाद**

हे भगवन्! चारों ओर से अमृतबिन्दु को बहाने वाले शोभन काव्य की अपेक्षा, समुद्र के समान अतिविस्तीर्ण एवम् गम्भीर तत्त्वों से परिपूर्ण शास्त्र की अपेक्षा तथा सुन्दरियों के विलासरूपी नदियों में फैलने वाली तरङ्ग की अपेक्षा मेरा मन आपकी भक्ति में ही अत्यधिक आनन्द का अनुभव करता है। यहाँ 'अधिकम्', इस पद से यह ध्वनित किया गया है कि पूर्वोक्त तीनों स्थलों में भी मेरे मन को आनन्द की प्राप्ति होती है किन्तु आपकी भक्ति में अपेक्षाकृत अधिक ही आनन्द मिलता है। अहो, वासनामय मन में भी आपका प्रभाव झलकता है, यह अभिप्राय है॥१९॥

**हता किलेहा नियतिर्निराशा**
**धृतिर्गता स्वार्थपराः सहायाः।**
**गतिर्मदीया जगतीह राधा-**
**मुरारिनामावलिरेव जाता।।२०।।**

### सहृदयहृदयप्रकाशः

संसारेऽस्मिन् भगवतः कारुण्यमूर्तेः प्रसादलेशादेव तन्नामस्मरणादिशरणता जीवस्येति प्राधान्येन प्रतिपाद्यं वस्त्वत्र। मदीया गतिः राधामुरारिनामावलिरेव जातेति; न तु जायते जनिष्यत इति निष्ठाक्तप्रत्ययेन ध्वन्यते। कथं जातेत्यपेक्षायामाह हता किलेहेति। सकलसांसारिकवाञ्छा हता तर्हि भाग्याधीनः संसारागमो भवत्वित्याशङ्कां निरसितुमाह नियतिर्निराशेति। दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः। भाग्यमपि नानुकूलम्। तथापि धैर्यधना हि साधव इति न्यायात् धैर्यालम्बनमुचितमित्याह—धृतिर्गतेति। तथा हि बान्धवाः सहाया भविष्यन्तीति स्वार्थपराः सहाया इत्यनेन भाग्यपुरुषकारसत्त्व एव बान्धवसाहाय्यं भवति। काव्यलिङ्गमलङ्कारः। यथोक्तं—हेतुर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यत इति॥२०॥

### भाषानुवाद

इस संसार में मेरी गति राधा और मुरारि की नामावली ही हो गयी है, न कि है या होगी। क्यों? इसीलिए कि सांसारिक वाञ्छा ही खत्म हो गयी है। तब भाग्य के सहारे रहा जाय? नहीं। वह भी निराश हो गया है। फिर तो धैर्य धारण करके पुरुषार्थ करना चाहिये? यह कैसे सम्भव है क्योंकि वह भी कहीं दूर चला गया है। फिर बन्धु कब काम आयेंगे? वे तो स्वारथी हो गये हैं। जब भाग्य ही नहीं साथ दे रहा है तो वे क्या साथ देंगे॥२०॥

**ममेदं कायं वा हृदयमथवा जीवितमपि**
**प्रभो! निन्द्यं हेयं तदपि च विकाराय सरति।**
**तमिस्राभिर्लिप्तं किमपि मम तत्त्वं तु निरये**
**वसच्छश्वत् स्मेरस्मितलवमहो ते स्पृहयति॥२१॥**

### सहृदयहृदयप्रकाशः

अत्र शरीरमनोजीवितानां निन्द्यत्वहेयत्वप्रतिपादनेनैव स्वीयापारदुरितसञ्चयो ध्वन्यते तथापि सांसारिकसुख-लवोपभोगप्रयासो भवतीति विकाराय सरतीत्यनेन प्रतिपाद्यते। तमिस्रास्तमःसन्ततयः, ताभिर्लिप्तं छुरितं किमपि मम तत्त्वं नरके निवसत् ईषद्विकासिस्मितलवं तव हे प्रभो! स्पृहयति। सर्वथा भवत्कृपालेशेनैव तादृग्विलक्षणतमिस्रातःसमुद्धार इति भावः।।२१।।

### भाषानुवाद

हे प्रभो! मेरा शरीर, हृदय अथवा जीवन भी निन्दनीय और त्याज्य है। त्याज्य होने के कारण ही उसे उदासीन रहना चाहिये तथापि कामादि विकार के लिए अग्रेसर रहता है। एक बात यह सुस्पष्ट है कि मेरे इस संघात में ही कोई अकथनीय ऐसा तत्त्व विद्यमान है जो नरक में रहता हुआ भी आपके थोड़े विकसित मन्दहास के लेश (अल्पता) की इच्छा करता है।।२१।।

**कुन्दस्रग्ग्रथिताश्च लोलचिकुराश्चन्द्राननानां जराऽ-**
**वस्थायामशुचिश्मशानवितता भस्मास्थिकल्पास्तथा।**
**नेत्राब्जे किल दूषिकाक्तमलिने वक्त्रञ्च सिङ्घाणक-**
**श्लेष्मक्लिन्नमहो भवन्ति भज रे चेतः सदा माधवम्।।२२।।**

### सहृदयहृदयप्रकाशः

कामिनीनां सुगन्धिसुमनोग्रथिताः लोलाश्चिकुराश्चूर्णकुन्तला जरायां प्रसाधनस्यानौचित्यादेव निसर्गाभद्रप्रायाः श्मशाने व्याप्ता भस्मास्थितुल्यास्तथा कमलसदृशे नयने नेत्रमलदूषिते मुखञ्च मलागारयुतं भवन्ति। अत्र भवन्तीति लटा अचिरादेव एवं स्थितिः, यौवनशोभासंभारस्य भङ्गुरत्वात् इति ध्वन्यते। अतस्तत्र रागं विहाय माधवभजन एव रतिर्विधीयतां हे मनः।।२२।।

### भाषानुवाद

हे मन! तुम सर्वदा माधव का ही भजन करते रहो! देहासक्त होकर विषयों की ओर लालायित रहने की आवश्यकता नहीं है। इसीलिए कि वृद्धावस्था में उन चन्द्रमुखियों के कुन्दमालाओं से गुम्फित चञ्चल घुँघराले बाल अपवित्र श्मशान में पड़े हुए भस्म और हड्डियों के समान सफेद हो जायेंगे तथा उनके कमल जैसे नयन नेत्रमलों से दूषित हो जायेंगे और उनका मुख भी कफ आदि से आर्द्र हो जायेंगे। यहाँ 'भवन्ति', इस लट्लकार के प्रयोग से यही ध्वनित किया गया है कि ऐसा होने में बिलम्ब नहीं है। एवञ्च, विषयपराङ्मुख होकर भगवान् के भजन में ही भलाई है॥२२॥

**प्रातः पङ्कजरेणुयामुनजलैरार्द्रानिलैः सेवितः**
**प्रीतः पत्रिगणप्रयुक्तमधुरै र्गीतैश्च गीर्भिर्गवाम्।**
**आहूतः किल माधवोऽधरपुटीचक्षुर्विकासात् परं**
**गोपीप्रीतिमधुप्रमत्त इव संविष्टोत्थितः पातु नः।।२३।।**

### सहृदयहृदयप्रकाशः

माधवो नः पातु। कथम्भूतोऽसाविति तं विशिनष्टि प्रातरिति। कमलपरागसिक्तयामुनानि जलानि यत्र तथाभूतैरार्द्रपवनैः सेवितः। अत्र सेवित इत्यनेन कर्मणि निष्ठाप्रत्ययेन न किल भगवाननिलान् सेवते अपितु कृतार्था अनिला एव तं सेवन्ते इति ध्वन्यते। तथा पक्षिप्रयुक्तमधुरगीतैः प्रीतः। पत्रिगणैर्मधुरगीतानि प्रयुज्यन्ते स्वमनीषिकयेति प्रयुक्तपदाभावे कथं ध्वन्येत? तथा गवां वचनैराहूतः। अतिप्रियत्वाद् गावो भगवन्तमाह्वयन्ति तदीयमाधुर्यं ग्रहीतुमिति। एतैः समुदितैःकारणैरधरनयनविकासो जायते भगवतः। ततः संविष्टः सुप्तः पश्चादुत्थितः। कथमिवेत्याह गोपीप्रीतिमधुप्रमत्त इव। गोपीप्रेमैव मधु तेन क्षीबः। प्रमत्त इति व्यञ्जकत्वाभिप्रायेण प्रयुक्तमस्ति॥२३॥

भाषानुवाद

माधव हम लोगों की रक्षा करें। कैसे माधव? यह अपेक्षा होने पर कहते हैं—प्रातःकाल कमल के परागों से मिश्रित यमुना के जलों से गीले पवनों के द्वारा सेवित होते हुए तथा पक्षियों के मधुर गीतों और गौओं की वाणी से आहूत (पुकारे गये), तत्पश्चात् अधर और नयनों को विकसित करने वाले, गोपियों के प्रेमरूपी मदिरा का पान कर लेने के कारण मतवाले हुए जैसे सोकर उठने वाले॥२३॥

**लोलदृष्टि वदनं स्मितचारु प्रीतिशालि वचनञ्च मुरारेः।**
**गोपिकाहृदयहारि च गीतं मानसेऽनुदिवसं कलयामि।।२४।।**

सहृदयहृदयप्रकाशः

अत्र 'स्मितचारु' इति मध्यमणिन्यायेनोभयत्र सम्बध्यते। सुस्पष्टाभिप्रायमिदम्॥२४॥

भाषानुवाद

भगवान् श्रीकृष्ण के मुख को जिसमें उनकी चञ्चल दृष्टि विद्यमान है और जो मन्द हास से सुन्दर लग रहा है। तथा प्रेम से सने उनके वचन (वाणी) को एवम् गोपिकाओं के हृदय को चुरा लेने वाले उनके गान को मैं प्रतिदिन अपने मन में धारण करता हूँ॥२४॥

**यस्य पुष्परजसा वपुरक्तं राधिकाधवलकान्तियुतं तद्।**
**जाह्नवीयमुनयोश्चलसङ्गे सान्ध्यरागसरणिं समुपैति।।२५।।**
**स प्रपन्नजननिर्वृतिदायी शान्तचित्तदृढशान्तिविधायी।**
**मानसं मृदुजडं मम तूर्णं प्राप्य दिव्यतु तरां यदुचन्द्रः।।२६।।**
**युग्मकम्।**

सहृदयहृदयप्रकाशः

यस्य भगवतः श्रीकृष्णस्य श्यामं वपुः शरीरं रक्तपीताभेन कुसुमपरागेणच्छुरितन्तथा राधिकाया विशदया छायया युतं

गङ्गायमुनयोः सङ्गमे सन्ध्याकाले तत्प्रतिफलितारुणिमशोभामुपैति स भगवान् यदुचन्द्रः प्रपन्नानामानन्दस्य प्रदाता तथा शान्तं चित्तं येषां तेषां दृढायाः शान्तेः कर्ता मम मानसं मन एव मानससरः, तत् प्राप्य खेलतु। कथम्भूतं तदित्याह—मृदु कोमलं तथा जडं जाड्ययुतम्। सरोऽपि मृदु जलं यत्र तथाभूतमिति। स्वागतावृत्तम्॥२५-२६॥

### भाषानुवाद

जिनका फूलों के पराग से सना हुआ शरीर श्री राधिकाजी की धवल (सफेद) कान्ति से युक्त होकर गङ्गा और यमुना के चञ्चल सङ्गम में सान्ध्यकालिक रक्तिमा की पद्धति को संप्राप्त होता है वे प्रपन्नजनों को आनन्द देने वाले तथा शान्तचित्त पुरुषो में सुदृढ़ शान्ति स्थापित करने वाले यदुवंश के चन्द्रमा शीघ्र ही कोमल एवम् जडता से युक्त और मृदु जल वाले मेरे मानस (मन) रूपी मानसरोवर में आकर कीडा करें॥२५-२६॥

**शीतनीरकणसिक्तसमीरे कुञ्जपुञ्जततियामुनतीरे।**
**सुस्मितप्रसरचन्द्रिकया मे माधवोऽस्तु विचरन् प्रमदाय।।२७।।**

### सहृदयहृदयप्रकाशः

स्वयमेव त्रिभुवनाभिलषणीयत्वाद् माधवः प्रमोदाय भवति। सकलशोभासंभारयुते यमुनातीरे मन्दहासप्रसारज्योत्स्नयोपलक्षितस्तु प्रकृष्टमदाय भवतु। एतेन सांसारिकक्षणिकसुखात् सर्वदा विरागोऽस्त्विति ध्वन्यते॥२७॥

### भाषानुवाद

शीतल जलकणों से आर्द्र पवन जहाँ बह रहे हों, ऐसे झुरमुटों की कतारों वाले यमुनातट में शोभन मन्दहास रूपी चन्द्रिका से उपलक्षित भगवान् श्रीकृष्ण विचरण करते हुए मेरे आनन्द के लिए हों॥२७॥

**पुष्परेणुविततौ व्रजभूमौ पादपङ्क्तिरतिचित्रकला सा।**
**निर्वृतिं हृदयमार्गमुपेत्य प्रेयसीव वितनोतु मुरारेः।।२८।।**

### सहृदयहृदयप्रकाशः

व्रजभूमौ सुमन:परागाणां विस्तार एव यत्र तत्र मुरारेः श्रीकृष्णस्य अत्यन्ताश्चर्यमुपेता:कला यस्यां तथाभूता पादयोः पङ्क्तिः मम मन:सरणिं प्राप्य निर्वृतिं परमानन्दं विस्तारयतु प्रेयसीव। प्रिया हि स्वयमेव हृदयमागच्छति मुदञ्च वितनुते इत्यत्र रसिकहृदयं प्रमाणम्।।२८।।

### भाषानुवाद

फूलों के परागों से विछी हुई व्रजभूमि में विद्यमान अत्यन्त अद्भुत कलाओं से संपृक्त मुरारि की वह लोकोत्तर चरणचिह्नपरम्परा मेरे हृदयमार्ग में आकर प्रेयसी की भाँति परमानन्द का विस्तार करे।।२८।।

**माधवस्य वदने हसितेन स्वच्छदन्तविसरा तनुकान्तिः।**
**अम्बुदे तडिदिव स्फुरती नो मङ्गलं सततमेव तनोतु।।२९।।**

### सहृदयहृदयप्रकाशः

सुस्पष्टाभिप्रायमिदम्।।२९।।

### भाषानुवाद

भगवान् श्रीकृष्ण के मुख में हसने के कारण स्वच्छ और सुन्दर दाँतों में फैलने वाली पतली कान्ति, जो मेघ में बिजली के समान फुरफुरा रही है वह हम लोगों के मङ्गल का विस्तार करे।।२९।।

**रासे श्यामतरुप्रकीर्णविशदोल्लासे सुधांशूदये**
**दन्तश्रीस्फुरिताधरेण भवता गोपाङ्गनाश्चुम्बिताः।**
**नीवीस्रंसतया परां हृदि मुदं संलेभिरे यादृशीं**
**लीलायाः स्मरणे सदा भवतु मे कृष्ण! प्रभो! तादृशी।।३०।।**

### सहृदयहृदयप्रकाशः

अत्र 'दन्तश्रीस्फुरिताधरेण' इति भगवद्विशेषणेन गोपाङ्गनाचुम्बने भगवतः परमतृष्णा व्यज्यते। अत एव ता नीवीस्रंसतया परां मुदमापुरिति॥३०॥

### भाषानुवाद

हे प्रभो! श्रीकृष्ण! चन्द्रोदय हो जाने पर श्याम वर्ण के वृक्षों में स्वच्छ आभा जहाँ फैल रही हो ऐसे रास में अपने दाँतों की सुषमा से स्फुरित अधर वाले आपके द्वारा चुम्बित गोपिकाओं को ऐसे आनन्द की प्राप्ति हुई जिससे उनकी कटिवस्त्र की गाँठ ही ढीली हो गयी। आपकी लीला का स्मरण करने पर सदा वैसे आनन्द की अनुभूति मुझे भी हो, ऐसी आप कृपा करें॥३०॥

पूर्वं व्रजे निवसता भवता क्रियाभि-
र्गोगोपिकावनलताश्चकितीकृताश्च।
पश्चादुपेत्य मथुरां विरहौर्वजाले
मग्नीकृताः कथमहो भगवन्न जाने॥३१॥

जाने च केवलमहं सिचयैर्विहीनं
रेणुप्रकीर्णतनुविप्रमहोदयस्य।
वक्षः स्ववक्षसि निधाय विलोचनाभ्यां
श्च्योतन्नवाम्बुविसरैरभिषेचनन्तद्॥३२॥ युग्मकम्।

### सहृदयहृदयप्रकाशः

प्रपत्तिपरायणं प्रति भगवतो लोकोत्तरक्रियाशालित्वं प्रतिपादयति द्वयेन पूर्वमिति। हे भगवन्। पूर्वं व्रजवासिना त्वया स्वीयमधुरलीलया गावो गोपिका वनलताः सर्वा अपि प्रमदरसपिण्डदानद्वारा अचकिता अपि चकिताः कृतास्तथा पश्चात् त्वयैव मथुरां प्राप्य ताः सर्वा अपि कथं विरहबाडवाग्नौ अमग्ना

अपि मग्नाः कृता इति सांसारिकोपालम्भः। एतत् सर्वं त्वया कथं कृतमिति न जानामि। भवानेव जानात्वित्यभिप्रायः। अहन्तु केवलं कुचैलमुने र्धूलिधूसरितकायस्य वक्षः स्वोरसि निधाय नेत्राभ्यामेव क्षरन्नूतनजलप्रवाहैरभिषेचनं तत् त्रिजगत्प्रसिद्धं लोकोत्तररूपं जाने। मम सर्वथा दृष्टिर्भवल्लोकोत्तरक्रियास्वेवास्ति, अतः अहमपि कृतार्थः करणीय इति भावः॥३१-३२॥

### भाषानुवाद

हे माधव! आपने पहले व्रज में निवास किया और अपनी सुमधुर लीलाओं के द्वारा गायों, गोपिकाओं और वहाँ की लताओं को भी आश्चर्यचकित कर दिया। इसके बाद मथुरा में आकर विरह रूपी वाडवाग्नि में उन्हें आप ही ने जलने के लिए झोंक दिया। ऐसा आपने क्यों किया? इसका मुझे पता नहीं है। मैं तो केवल इतना ही जानता हूँ कि धूलिधूसरित शरीर वाले विप्र महोदय सुदामा के वस्त्रविहीन वक्षःस्थल को अपने वक्षःस्थल में लेकर अपने झर-झर बहते आसुओं से उनका अद्भुत अभिषेक आपने कर दिया था॥३१-३२॥

**यस्य प्रेमावलोकस्मितगतिमुरलीकाकलीभिः प्रतीता**
**गावो गोपाङ्गनाश्च प्रमुषितमनसो लोकलीलां त्यजन्ति।**
**आकाशं दिक् च कालो दधति च विभुतां यस्य पादाश्रयेण**
**प्रेयान् प्रीतिप्रियाणां निवसतु स शिशु र्माधवो नो हृदन्तः॥३३॥**

### सहृदयहृदयप्रकाशः

श्रीभगवतः स्वहृदयवसतिनिवसतिमेव प्रतिपादयति यस्येति। स प्रसिद्धः शिशु र्माधवः नो हृदयमध्ये निवसत्वित्यनेन सम्बन्धः। कोऽसावित्याह—यस्य प्रेमपुरःसरावलोकनेन स्मितेन मन्दहासेन गमनेन मुरलीध्वनिना च प्रतीता हृष्टाः। 'ख्याते हृष्टे प्रतीत' इत्यमरः। गावो गोपाङ्गनाश्चकारात् सर्वेऽपि प्राणिनः सांसारिकीं क्रियां त्यजन्ति

अर्थात् त्वदीयलीलारसमात्रनिर्भरा भवन्ति। सर्वथाऽहमपि पापस्तथैव सम्पादनीयस्त्वद्विलक्षणप्रभावत्वादिति ध्वन्यते। अपि च शास्त्रे प्रतिपादिताः सर्वेऽपि विभुपदार्थास्तव कृपालेशभाजो भवन्ति। भवानपि प्रीतिप्रियाणां प्रेयान्, अतोऽहमेव कथमुपेक्षणीय इत्यभिप्रायः।।३३।।

**भाषानुवाद**

जिनके प्रेमपूरित अवलोकन, मन्दहास, गति और मुरलीतान गायों और गोपिकाओं के मन को चुरा लेते हैं और वे सांसारिक क्रियाओं का त्याग कर देते हैं तथा जिनके चरणों के आश्रय से ही आकाश, काल और दिशायें विभुता को धारण करती हैं वे शिशुरूप में वर्तमान माधव हमारे हृदय के भीतर निवास करें। वे भगवान् उनके प्रियतम हैं जिनको उनके चरणों में प्रीति ही प्रिय है।।३३।।

**प्रसार्य प्रीतिं तां निजमृदुविलासैर्विलसितां**
**व्रजस्त्रीणां चेतश्चितसुममिव स्वस्य पदयोः।**
**निधाय त्वं स्वामिन्! सदयममृतास्वादमधुरं**
**मुखेऽदास्ताम्बूलस्वदितशकलं यत्तदुचितम्।।३४।।**

**सहृदयहृदयप्रकाशः**

चराचरात्मकस्य जगतो भगवदधीनवृत्तित्वं प्रसिद्धरासघटनाव्याजेन प्रतिपादयति प्रसार्येति। हे स्वामिन्! स्वकीयललितविलासविजृम्भितां तां प्रसिद्धां प्रीतिं विस्तार्य व्रजाङ्गनानां चेतः चितप्रसूनमिव निजपदयोर्निधाय नासि त्वं भविष्यमाणकर्तव्यताशून्यः। किन्तर्हि? सदयमेव पीयूषमधुरं ताम्बूलस्य स्वदितखण्डं तासां मुखे यद् दत्तवान् तदुचितमेव। अत्रौचित्यप्रतिपादनेनैव भगवतः सेवकान् प्रत्यानृण्यं ध्वन्यते। सर्वथा भगवान् यमिच्छति तं कृतार्थयत्येवेत्यभिप्रायः।।३४।।

## भाषानुवाद

हे स्वामिन्! अपने मृदुल विलासों से उस लोकातीत प्रीति का प्रसारण करके अपने चरणों में व्रजनारियों के चित्त को चुने हुए फूल की तरह स्थापित करके जो आपने उनके मुख में अमृत के समान आस्वाद में मधुर चबाये गये पान के टुकड़े को दे दिया वह सर्वथा उचित ही है। संसार से हटाकर उनके चित्त को अपने चरणों में लगा दिया तो उतना करना उचित ही है, यह अभिप्राय है।।३४।।

**पवनेरितास्तरुलताः सुरभिः सुरभिप्रसारतरला जगती।**
**पिकपञ्चमस्वरततञ्च नभस्तव लीलया तु मुदमादधिरे।।३५।।**

**चलवासनोर्मिधुतशान्तितरौ हृदये कथन्न मम कृष्ण! मरौ।**
**तव विभ्रमस्मितशमाम्बुधयो निवसन्ति सन्ति दुरितानि कथम्।।३६।।**
**युग्मकम्।**

## सहृदयहृदयप्रकाशः

भगवत्प्रियताशून्यं दुरितपूर्णं निजहृदयं वीक्ष्य भगवन्तं सोपालम्भमाह—पवनेरिता इति। हे कृष्ण! तरुसमाश्रिता लताः पवनप्रेरिताः, सुरभिर्वसन्तः, तस्य प्रसिद्धत्वात् विशेषणाप्रयोगः। तथा सौरभविस्तारेण चञ्चला पृथिवी पिकपञ्चमव्याप्तं नभश्चैते सर्वेऽपि मुदमादधिरे तव लीलया। अत्र 'तु' इति व्यञ्जकत्वाभिप्रायेण प्रयुक्तम्। नैते सर्वे अचेतनत्वादेव मुदभाजस्तथापि मुदं हर्षं प्रापुरिति तव लीलाविलासप्रभावः। अहन्तु चेतनः कथं विमुख इति? तदेव प्रतिपादयति चलेति। चञ्चलवासनातरङ्गैः कम्पितः शान्तिरूपः कुत्रचित् कोणे विद्यमानस्तरुर्यत्र तथाभूते हृदयमरौ। अयमर्थो हृदयस्य मरुत्वेन प्रतिपादनादेव लभ्यते। कथन्न तत्र तव विलासमधुरहासोपलक्षिता शमाम्बुधयो निवसन्ति, पापान्येव कथं सन्ति? मम दुर्दशायां भवानेव हेतुरिति ध्वन्यते।।३५-३६।।

भाषानुवाद

हे कृष्ण! वायु से प्रेरित वृक्ष और लतायें, वसन्त ऋतु, सुगन्ध के प्रसार से चञ्चल हुआ पूरा संसार तथा कोकिलों के पञ्चम तान से पूर्ण आकाश, ये सभी आपकी लीला से आनन्द-रस से सराबोर जब हो गये तब आप ही बताइये कि मेरे मरुस्थल हुए उस हृदय में, जिसके किसी कोने में विद्यमान शान्ति का वृक्ष चञ्चल वासनाओं की चपेट में आकर हिल गया है, आपके सविलास मन्दहास रूप शम (अन्तरिन्द्रियनिग्रह) के सागर क्यों नहीं निवास करते? उस मेरे हृदय में पाप ही क्यों हैं? आपके समक्ष ऐसा क्यों हो रहा है, प्रभो! क्या मेरी इस दुर्दशा में आप हेतु नहीं हैं?॥३५-३६॥

**विषयाग्नितप्ततनुमाकुलताऽतनुतान्तितुन्नमनसं रजसा।**
**अवलिप्तमाशमय माममृतं वपुरम्बुदेन सततं स्रवता।।३७।।**

सहृदयहृदयप्रकाशः

हे कृष्ण! सततपीयूषद्रवस्राविणा निजशरीरमुदिरेण मामाशमय। कथम्भूतं मामित्याह विषयेति। विशेषेण सिन्वन्ति आत्मानमिति विषयास्त एवाग्नय स्तैस्तप्ता तनुर्यस्य तम्। अत्राग्निपदेन तनोः पतङ्गत्वं ध्वन्यते। तथा दीर्घग्लानिव्यथितमानसं रजसा रजोगुणेन गर्वितम्॥३७॥

भाषानुवाद

हे कृष्ण! मेरा शरीर विषयरूप अग्नियों से सन्तप्त हो गया है और मेरा मन भी आकुल होकर दीर्घ व्यथा से व्यथित हो गया है। ऐसी अवस्था में हे प्रभो! निरन्तर अमृत को वरसाने वाले अपने शरीररूपी मेघ से रज (धूली, रजोगुण) से आच्छादित या गर्वित मुझे आप शान्त क्यों नहीं करते?॥३७॥

**सुकुमारमङ्गमतिकोमलतालसिता मतिश्च मधुरा प्रकृतिः।**
**महती कला च तव कृष्ण! सदा मुदमातनोतु हृदि रागयुताम्।।३८।।**

### भाषानुवाद

हे कृष्ण! आपका सुकुमार अङ्ग, अत्यधिक कोमलता से सुशोभित आपकी बुद्धि, आपकी मनोरम प्रकृति (स्वभाव) और आपकी विशाल कला, ये सभी मेरे हृदय में उस आनन्द का विस्तार करें जो आपके प्रति अनुराग से पूर्ण हो।।३८।।

**वनितावलोकजनितोल्लसतिर्विभुतावलेपवितता च मतिः।**
**तव पादपद्मरजसां निचये लुठतां कुतोऽस्तु भगवन्! हृदये।।३९।।**

### सहृदयहृदयप्रकाशः

अङ्गनावलोकनोत्पन्नसमुल्लासवैभवगर्वव्याप्तमानसयो भँग-वच्चरणनलिनपरागराशौ लुठतां हृदयेऽवकाशो न भवेदेवेत्यर्थ-शक्तिमूलकेन ध्वनिना भगवत्प्रभावातिशयात्मकं वस्तु व्यज्यते।।३९।।

### भाषानुवाद

हे भगवन्! स्त्रियों को देखकर उत्पन्न हुआ एक अद्भुत उल्लास और वैभव के गर्व से विस्तीर्ण बुद्धि, ये दोनों उनके हृदय में कैसे ठहर सकते हैं, जो आप के चरणकमलों के परागों में लोटते रहते हैं?।।३९।।

**श्यामच्छटाच्छुरितकम्रतनुं भवन्तं**
**गौराङ्गकान्तिनिवहा कमला वृणीते।**
**आधाय किं नयनयोः सरसाञ्जनाय**
**रामाः प्रसाधनपरा हि सदा भवन्ति।।४०।।**

### सहृदयहृदयप्रकाशः

लक्ष्मीकर्तृकभगवद्वरणमुत्पेक्षते श्यामेति। हे भगवन्! इति सम्बोधनमध्याहार्यम्। तमुद्दिश्यैव वस्तुप्रतिपादनात्। कृष्णाच्छाया-व्याप्तकमनीयविग्रहं भवन्तं गौराङ्गकान्तिनिचया कमला वृणीते। कथमिति चेतो मम हेतुं गवेषयति। यतो हि कन्यका गौरच्छाया-

संवलिता न कृष्णकायं कान्तं कामयमाना दृश्यन्ते। कमला त्वां वृणीते इति भाव्यं केनचिद् धेतुना। तदेवाह आधायेति। भवन्तं नयनयोराधाय सरसाञ्जनाय। सम्भवेदेतदिति, यतो हि सुन्दर्यः सर्वदा प्रसाधनपरा एव भवन्ति। सर्वं वाक्यं सावधारणमिति न्यायात्। प्रसाधनं कायालङ्कारीकरणमेव परं प्रकृष्टो व्यापारो यासु ताः। अत्रोत्प्रेक्षार्थन्तरन्यासयोः संकरः, न तु संसृष्टिरिति भ्रमितव्यम्।।४०।।

### भाषानुवाद

हे भगवन्! आपका श्रीविग्रह तो श्याम (काली) छटा से आच्छादित और कमनीय है तथा लक्ष्मीजी ऐसी हैं कि उनके शरीर में गोरे अङ्गों की आभा झलक रही है। फिर आपका वे वरण क्यों करती हैं? क्या वे आपको अपनी आँखों में बसा कर सरस अञ्जन की कमी पूरा करने के लिए तो वरण नहीं करती? ऐसा सम्भव है क्योंकि सुन्दरियों की सारी दृष्टि अपने प्रसाधन में ही रहती है।।४०।।

**मनसाऽमलेन मसृणस्मितवाग् विकचं मुखं मुररिपोरमितम्।**
**नलिनं मरीचिभिरिव स्फुरितं सवितुः स्मरामि किल यामि मुदम्।।४१।।**

### भाषानुवाद

मनोहर मन्दहासों से परिपूरित वाणी वाले तथा अनुपम रूप में विद्यमान खिले हुए मुरमथन के उस मुख का मैं स्मरण करता हूँ और आह्लादित भी होता हूँ जो सूर्य की किरणों से स्फुरित हो रहे कमल की भाँति है।।४१।।

**मृदुलप्रवालपदपद्मयुगं हृदये दधामि तव कृष्ण! नवम्।**
**रुधिरेण कालियफणेषु ललत् प्रसरत्प्रसूनमिव भाति च यत्।।४२।।**

### भाषानुवाद

हे कृष्ण! मुलायम प्रवाल (विद्रुम) के समान आपके नूतन चरणयुगल को मैं अपने हृदय में धारण करता हूँ। आप का वह

चरणयुगल कालिय नाग के फणों में क्रीडा करता हुआ उसके रक्त से वैसे ही सुशोभित है जैसे उसमें लाल-लाल फूल विखेर दिये गये हों। अभिप्राय यह है कि कालियनाग के खून के बिन्दुओं से भगवान् के चरण वैसे लग रहे हैं जैसे कोई उनमें पूजा के फूलों को विखेर दिया हो॥४२॥

**परमसुरभौ छायासिक्ते च नीलसरोरुहे**
**स्फुरति ललिते ज्योत्स्नासारे च लोहितपङ्कजे।**
**अरुणविधुभि र्युक्ते रक्ते च शुभ्रकुशेशये**
**भ्रमतु भगवन्! भृङ्गः सङ्गं विहाय सदा मुदा।।४३।।**

### सहृदयहृदयप्रकाशः

प्रथमद्वितीयतृतीयचरणैर्भगवतः श्रीकृष्णस्य तनुवदनचरणं प्रतिपाद्यते। सर्वत्र निगीर्याध्यवसानलक्षणातिशयोक्तिः। भृङ्गेणारोप्यमाणेन मनसो निगरणम्। भगवद्विग्रहादिष्वेव मनो भ्रमत्विति कवेरभिलाषः॥४३॥

### भाषानुवाद

यहाँ कवि का यही अभिलाष है कि उसका मन भगवान् के श्रीविग्रहादि में ही भ्रमण करे। 'भृङ्ग' पद से मन का प्रतिपादन है। हे भगवन्! मेरा मन सङ्ग का परित्याग करके प्रसन्नता से कान्तियुक्त अतिशय सुगन्ध वाले नीलकमल में, स्मितचन्द्रिका की वृष्टि जहाँ हो रही हो ऐसे सुन्दर प्रस्फुरित होने वाले रक्तकमल में तथा अरुणिम (रक्त) आभा से संपृक्त चन्द्रों से युक्त और लाल हुए शुभ्र कमल में ही भ्रमण करे। यहाँ 'नीलसरोरुह' पद से भगवान् का शरीर, 'लोहितपङ्कज' पद से वदन और नखरूप चन्द्रों से अनुप्राणित 'शुभ्रकुशेशय' पद से चरण का प्रतिपादन है॥४३॥

**प्रमुदितवदनाम्बुजं मुरारेःस्मितचयकेसररूषितं सितं तद्।**
**व्रजचलवनितावलोकलासैस्तरलितमस्तु च चेतसि स्फुटं नः।।४४।।**

सहृदयहृदयप्रकाशः

अत्र मुरारेः प्रमोदिवदनाम्बुजस्य सितत्वे स्मितजातकेसरैरूषितत्वस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। तदित्यनुभवैकगोचरं वदनं नश्चेतसि सुप्रकाशमस्त्वित्यभ्यर्थना कवेः॥४४॥

भाषानुवाद

श्रीमुरमथन भगवान् श्रीकृष्ण का अत्यधिक प्रसन्न मुखकमल जो मन्दहासों के समुदाय रूपी केसरों से विशद हो गया है और जो व्रज की चञ्चल नारियों की दृष्टियों से तरलतापूर्ण है, मेरे चित्त में प्रकाशित हो॥४४॥

**विकसितमसृणाभ्रकप्रकम्प्रं तरुमलिभिश्च सदैव चारु जुष्टम्।**
**तरलितनवमालतीसुलग्नं हृदि कलयामि न यामि वा तमोऽहम्।।४५।।**

सहृदयहृदयप्रकाशः

अलिभि र्भ्रमरैर्भक्तैरित्यर्थः। तैः सदैव सेवितं विकसित-सरसमेघवत् कमनीयं कम्पनयुतञ्च, तथा तरलितमालतीलतावेष्टितं तरुं हृदि दधामि। अत एव नाविद्याध्वान्तं प्रपद्ये। अत्र तरुणा श्रीकृष्णो मालत्या च श्रीराधिका प्रतिपाद्यते। अतिशयोक्तिरलङ्कारः॥४५॥

भाषानुवाद

विकसित हुए सरस मेघ के समान कमनीय एवम् कम्पनयुक्त तथा भ्रमरों (प्रपन्नों) से सदैव सेवित और चञ्चल, नूतन मालतीलता से आच्छादित उस वृक्ष (भगवान् श्रीकृष्ण) को अपने हृदय में धारण करता हूँ तथा तम अर्थात् अविद्यान्धकार को प्राप्त नहीं होता। अथवा 'वातमोहम्' अर्थात् वातरोग के प्रकोपजन्य मोह (मूर्च्छा) को प्राप्त नहीं करता॥४५॥

**यस्य श्रीरपि पदयो रजःकणै र्वा**
**प्राप्तश्रीर्यतिनिचये निधाय वित्तम्।**

कुर्वन्ती पृथगमृतप्रवाहभाजोः
संपत्त्याः सपदि तयोः सशङ्कमास्ते।।४६।।

गोपीनां स्तनयुगकेसरैश्चिताङ्गो
माधुर्यद्रवततिभिस्तरुँश्च सिञ्चन्।
राधाया अधरसुधां निपीय हृष्टो
दीव्यान् मे मनसि सदा प्रभुः स कृष्णः।।४७।। युग्मकम्।

**सहृदयहृदयप्रकाशः**

स प्रसिद्धो वृन्दाविपिनविहरणशीलः प्रभुः श्रीकृष्णो मम मनसि क्रीडतु। कथम्भूतोऽसौ भगवानित्यपेक्षायामाह यस्येति। श्रीरपि यस्य पदपद्मपरागकणैः श्रियं त्रिभुवनसौभाग्यप्रदायिनीं लक्ष्मीं प्राप्ता सती यतिगणाद् बिभेति भक्तिप्रभावात् श्रीमद्भगवच्चरणनलिनसंसेवनाद् यतयोऽपि तथा भवेयुरिति धिया। अत एव सा यतिगणे भौतिकभोगप्रधानं धनं निक्षिप्य सुधापूरशालिनोस्तयोर्भगवत्पदयोः सम्पत्त्यास्तं पृथक् करोति। एवमपि सा स्वस्था नैव शेते। किन्तर्हि? सशङ्कमास्ते। कदाचित् ते पुनर्विरागभाजो भगवन्तं भजेयुरिति शङ्कायां हेतुः। एतेन भगवच्चरणयोः संप्राप्तेः परमपुरुषार्थत्वं सूचितं भवति। द्वितीयश्लोकीयपादत्रयेण मनसि देवने योग्यता प्रतिपाद्यते।न हि नीरसः कोऽपि दीव्यति। एवञ्च गोपीस्तनयुगलाचितकेसर-पीतिमवासितस्तत एव हेतोः स्थावरानपि निजमाधुरीभिराह्लादयन् श्रीराधिकाधरसुधापानप्रमुदितः। एतेन कवे र्निर्मत्सरत्वं ध्वन्यते। सर्वे तत्प्रसादभाजो भवेयुरिति भावः। प्रहर्षिणीवृत्तम्।।४६-४७।।

**भाषानुवाद**

जिनके चरणों के परागकणों से परमशोभासंभार को प्राप्त कर लेने वाली लक्ष्मी भी संन्यासियों को धनधान्य से पूर्ण करके अमृत के प्रवाहों से पूरित उन चरणों की सम्पत्ति से उन्हें दूर करके सदा शङ्का से ग्रस्त रहती है कि कहीं बाबाजी सांसारिक विभुता का त्याग

करके पुनः भगवत्सेवानुरागी न हो जाँय। तात्पर्य यह है कि लक्ष्मी नहीं चाहती कि भगवान् के चरणरजों का सेवन कोई और करे। कोई जब घरद्वार त्याग करके भगवान् की ओर उन्मुख होता है तो लक्ष्मी मारे भय से पुनः उनको विभुतामय प्रपञ्च में लगा देती है। ऐसे भगवान् श्रीकृष्ण गोपियों के स्तनयुगल में विद्यमान परागों से सने शरीर वाले और अपनी माधुरी के द्रवसन्तान से तरुओं (प्रपन्न) को अभिसिञ्चित करते हुए तथा श्रीराधाजी की अधरसुधा का पान करके प्रसन्न हुए मेरे मन में समाकर क्रीडा करें।।४६-४७।।

**वाञ्छन्ति प्रियतां विहाय तव ये मत्ताङ्गनानां स्फुरद्-**
**बिम्बोष्ठप्रसरत्सुराञ्च सरसाश्लेषं प्रभो!ते नराः।**
**त्वामुद्दिश्य तपस्ययैव सकलं तत् प्राप्नुवन्ति ध्रुवं**
**स्वर्गादप्युपयान्ति ह्यत्र वनिता विघ्नाय तेजस्विनः।।४८।।**

**सहृदयहृदयप्रकाशः**

भौतिकसुखायापि भगवदुद्देश्यकं तपो भवतीति प्रतिपादयति वाञ्छन्तीति। आद्यतो द्वयेन श्रीमद्भगवदभिलाषभाजामपि यौवनोल्लासपूर्णानां शोभनाङ्गघटितकायसम्पत्तीनां कामिनीनां बिम्बशोणच्छविस्फुरदधरासवतदङ्गसरससुभगालिङ्गनेऽभीष्टे भवत एवेत्युक्तम्। तद्विषयकानादिवासनाप्रवाह एव तत्र हेतुः। हे प्रभो! त्वद्भजनेन तत्प्राप्तिरपि भवति। तेन लौकिकसुखेहया भजनत्यागस्यानौचित्यं ध्वन्यते। कुत एवमित्यर्थान्तरेण समर्थयते स्वर्गादपीति। यतोऽत्र भूलोके तपस्वितपो हन्तुं स्वर्गादप्यप्सरस आगच्छन्ति। केवलं धैर्यावलम्बो भवेत्। यस्य यावती धैर्यसम्पत् तस्य तावत्येव वनिताभोगसम्प्राप्तिरित्यभिप्रायः।।४८।।

**भाषानुवाद**

हे प्रभो! जो मानव आपकी भक्ति का परित्याग करके मदमस्त सुन्दरियों के पके कुनरू जैसे लाल होंठो में फैलने वाली मदिरा

की और उनके आलिङ्गन की कामना करते हैं वे भ्रम से ही सही, यदि आपको अभिलक्षित करके तपस्या करते हैं तो उस अपनी तपस्या से ही सब कुछ प्राप्त कर लेते हैं क्योंकि इस भूलोक में तपस्वी के विघ्न के लिए स्वर्ग से अप्सरायें भी आ जाती हैं। तात्पर्य यह है कि तपस्वी यदि सुन्दरीसेवन करना चाहता है तो वह भी आपके लिए की जाने वाली तपस्या से प्राप्त कर लेता है। स्वर्ग से जब यहाँ विघ्न डालने के लिए अप्सरायें आ जाती हैं तो भूलोक की स्त्रियों की वार्ता ही क्या है? उनका जमघट तो लग ही जायेगा।।४८।।

**कान्तारे तव पादपङ्कजगतिर्गीतिश्च वंशीरवा**
**या गोपीजनमानसे वितनुते कौतूहलं सा कथम्।**
**अन्तश्चेतसि कामिनीव निहिता प्रेमानुभावं पुना**
**रोमाञ्चाश्रुविमोचनं न कुरुते लीलानुरक्तस्य मे।।४९।।**

**सहृदयहृदयप्रकाशः**

अत्र लीलानुरक्तत्वरूपकारणसत्त्वेऽपि प्रेमानुभावरोमाञ्चाश्रु-विमोचनरूपकार्यस्याभावकथनाद् विशेषोक्तिरलङ्कारः। यथोक्तं 'विशेषोक्तिरखण्डेषु कारणेषु फलावच' इति। कथन्न गोपीष्विव मयि कृपादृष्टिस्त इति भगवतः पक्षपातिता प्रकाशिता भवति।।४९।।

**भाषानुवाद**

हे मुरमथन! जङ्गल में आपके चरणकमलों का गमन और बांसुरी की तान वाली राग, जो गोपियों के मन में परम कौतूहल को पैदा करती है वह आपकी लीला में अनुरक्त मेरे भीतरी मानस में कामिनी के समान समाकर प्रेम के अनुभाव के रूप में व्यवस्थित रोमाञ्च और आसुओं का विमोचन क्यों नहीं करती? गोपियों में यदि आप अपने-अपने क्रियाकलापों से कौतूहल पैदा करते हैं तो मैंने क्या अपराध किया है प्रभो! कि मेरे मानस में कौतूहल पैदा

नहीं होता? यह आपका कैसा पक्षपात है? इस प्रकार यहाँ भगवान् के प्रति कवि का आक्षेप है॥४९॥

**सत्यं ते महती कृपा प्रणयिनां श्रेयोवहा वर्तते**
**यां प्राप्याशु च निर्वृतिर्हृदि परा तेषां समुज्जृम्भते।**
**गोपीचित्तरसायन! त्वमनिशं दृष्टिप्रसादेन मा-**
**मानन्दैकपरायणं न कुरुषे कस्मादकस्मात् प्रभो!॥५०॥**

**सहृदयहृदयप्रकाशः**

आत्मनि तत्कृपाकटाक्षाभावमेव भगवन्तं पृच्छति सत्यं त इति। हे प्रभो! प्रणयिजने तव कल्याणकारिणीं कृपां प्रति नास्ति काचिद् विप्रतिपत्तिः। सकलशास्त्रेषु तस्या यथार्थत्वविनिर्णयात्। तथापि हे गोपीचित्तस्य रसायन! कथमकस्मात् त्वं मां भक्तिरसाप्लुतं न करोषि? कर्तुमकर्तुमन्यथाकर्तुं समर्थोऽपि मां प्रति कथन्ते महती उदासीनतेति गोपीचित्तरसायनोक्त्याऽऽविष्कृता॥५०॥

**भाषानुवाद**

हे प्रभो! मुरमथन! यह यथार्थ है कि आपकी कल्याणकारिणी महती कृपा अपने भक्तों पर होती है जिसको प्राप्त करके आपके भक्तों के हृदय में परमानन्द का समुज्जृम्भण (प्रसार) होता है। हे गोपियों के चित्त के रसायन! आप अपनी कृपादृष्टि से मुझे भजनानन्दपरायण अकस्मात् क्यों नहीं बनाते? आप सब कुछ करने में समर्थ हैं तो मुझे भक्तिरस में क्यों नहीं डुबोते? इतनी उपेक्षा यह कैसे भगवन्?॥५०॥

**को रागः स नु येन देव! विदुरातिथ्यं त्वया स्वीकृतं**
**पार्थज्ञानविधायिनी तव पुनर्मैत्री च सा का परा।**
**गोप्यो येन सुतर्पिता व्रजभुवि ब्रूहि त्वमस्मान् प्रभो!**
**पुण्यं किं तदनारतं व्यवसितुं सर्वं वयं शक्नुमः॥५१॥**

### सहृदयहृदयप्रकाशः

हे प्रभो! यद्रागमैत्रीपुण्यपरवशेन त्वया विदुरस्यातिथ्यं पार्थस्यात्मज्ञानं गोपीनां संतर्पणञ्च विहितं तान्यवश्यमेव लौकिकवैदिकोपायभिन्नान्येव भवेयुः, अन्यथा सर्वेऽपि तथाविधास्तव कृपाभाजःस्युरिति। तत्सर्वं किमिति? अस्मान् कथय! देव! यतो हि त्वदुपदेशलब्धसामर्थ्या वयमपि तथा भवेमेति शक्नुम इति पदेन ध्वन्यते॥५१॥

### भाषानुवाद

हे प्रभो! आप ही अब बताइये कि वह कौन-सा अनुराग है जिसके बल से आपने विदुर के आतिथ्य को स्वीकार किया? वह मित्रता भी कैसी है जिसके बलबूते आपने अर्जुन को वह दिव्य ज्ञान दिया? उस पुण्य को भी आप कहें जिसके प्रभाव के कारण व्रजभूमि में आपने गोपियों को सन्तृप्त कर दिया? आपकी कृपा से निरन्तर इन सारे कार्यों को करने में मैं समर्थ हूँ। तात्पर्य यह है कि आपकी कृपा जैसे प्राप्त हो वह साधन वेदादिशास्त्रों में मुझे दिखायी नहीं देता। कृपया उस साधन का ज्ञान कराइये जिससे मैं भी वैसा ही बन सकूँ!॥५१॥

**प्रीतिजुषां नुतिं विदधतां धृतिमपि दधतां**
**किन्न करोषि चन्द्रविशदां त्यजसि च कमलाम्।**
**कृष्ण! मुदे त्वमेव भजतां विभवभवमदं**
**कृन्तसि चक्रकान्तिकलया दनुजगलमिव।।५२।।**

### सहृदयहृदयप्रकाशः

शास्त्रानतिक्रमेण भजतां भगवत्कृपाभूयस्त्वमाह प्रीतीति। हे कृष्ण! तव कृपावाप्तये पूर्वन्तावत् त्वयि प्रीतिरपेक्ष्यते। तस्या एव कार्ये प्रणतिकरणधैर्यधारणे। एवम्भूतभक्तानां कृते त्वं किं न करोषि? अर्थात् सर्वमपि सारथ्यादिकं कार्यं करोषि। सोदर्यत्वाद् विधुरिव

धवलशरीरां हृदयनिहितां लक्ष्मीमपि त्यजसि। किमतः परं लोके दुष्करमस्तीति भावः। भक्तानां भक्तिरसपरिपूर्णता यथा स्यात् तथा त्वं तेषां विभवादेश्वर्याज्जातं मदमपि छिनत्सि। कथमिव? आह— चक्रकान्तेः कलया, न तु चक्रेणैव, दैत्यग्रीवामिव। एतेन भगवदायुधानां तदीयशोभाविधायित्वमेव मुख्यं कार्यम्, भक्तत्रासकानां तत्कान्त्यैव नाशादिति वस्तु व्यज्यते। वंशपत्रपतितं वृत्तम्।।५२।।

**भाषानुवाद**

हे कृष्ण! आपकी परम उदारता वेदादि सारे शास्त्रों से प्रसिद्ध है। आपकी भक्ति का जो सेवन करते हैं और जो आपके चरणों में नतमस्तक होते हैं तथा आपत्काल में धैर्य भी धारण करते हैं, उनके लिए आप क्या नहीं करते? अर्थात् सब कुछ करते हैं। क्या कहा जाय? चन्द्रमा के समान चमचमाती लक्ष्मी का भी आप त्याग कर देते हैं। हे भगवन्! आप ही भजन करने वालों के आनन्द के लिए ही वैभव के कारण उत्पन्न होने वाले मद को अपने चक्र की कान्तिकला से वैसे ही काट देते हैं जैसे दैत्यों की गर्दन काटते हैं। तात्पर्य यह है कि भक्तों को भक्तिरस प्राप्त होता रहे, ऐसा सन्तुलन भगवान् ही बनाते हैं।।५२।।

**बाल्यं चाद्भुतसौकुमार्यमतनोः शोभातिरस्कारिणी-**
**च्छाया कापि वचःकला कलकलः काञ्चीभवश्चैकतः।**
**तत्रैवागतरक्षसामसहनोपायैस्तु संपादिता**
**वीराणामुचितक्रियास्तव पुनः कोऽयं विचित्रक्रमः।।५३।।**

**सहृदयहृदयप्रकाशः**

बाल्यलीलया प्रपन्नचेतसि चमत्कृतिविधायिनः प्रभोः कंसप्रचोदितानामन्येषां वा राक्षसानामुपद्रवासहने स्वयमेवाविर्भूता न तु युद्धशिक्षानुशीलिता ये उपायास्तै संपादिता वीरोचितक्रियाकलापा आश्चर्यमुत्पादयन्तीति पृच्छति कविः कोऽयं विचित्रक्रम इति।।५३।।

### भाषानुवाद

हे मुरमथन! एक तरफ वह अद्भुत सुकुमारता से युक्त आपका बाल्य और काम की शोभा को भी तिरस्कृत कर देने वाली कान्ति तथा कोई लोकोत्तर वाणी की कला एवम् आपकी मेखला से उत्पन्न होने वाला कलकल रव तो दूसरी तरफ वहीं आये हुए राक्षसों को देखकर सहन न होने के कारण उन-उन उपायों से संपादित वीरोचित क्रियाकलाप। प्रभो! यह आपका कौन सा विचित्र उपक्रम है?॥५३॥

**शौर्यैर्वाऽतुलवैभवैश्च जगती स्तब्धीकृता यैश्चिरं**
**येषां त्वञ्च सहायकः कुशलिनो युद्धे च ते पाण्डवाः।**
**आकृष्टामलकेषु वीक्ष्य कृपणां मध्येसभं तां प्रियां**
**निर्विण्णा हृतचेतना इव दधु धैर्यन्न तत् त्वं प्रभो!।।५४।।**

### सहृदयहृदयप्रकाशः

अत्र सर्वतोभावेन समर्थानामपि नीतिमर्यादानुल्लङ्घने दृश्यमाना धृति र्भगवत्स्वरूपातिरेकिणी नेति प्रतिपाद्यते। आदितः पादद्वयेन पाण्डवानां सामर्थ्यन्तथोत्तरार्धद्वयेन तथाविधं धृतिधारणमेवोक्तम्। उत्प्रेक्षालङ्कारः॥५४॥

### भाषानुवाद

हे प्रभो! जिन युद्ध में कुशल पाण्डवों ने चिर काल तक अपने अतुलित वैभव वाले पराक्रम से पूरी जगती को स्तब्ध कर दिया था और जिनके सहायक भी आप जैसे सर्वशेषी परमेश्वर थे वे भरी सभा में केश पकड़कर घसीटी जाती हुई दीन अपनी प्रियतमा द्रोपदी को देख वैसे विषादग्रस्त हुए थे जैसे उनकी चेतना का ही कोई अपहरण कर लिया हो। ऐसी अवस्था में भी वे उस समय धैर्य धारण किये थे! क्या वह धैर्य आप नहीं हैं?॥५४॥

**पीतं येन मुहुः स्नुतस्तनयुगं मातुश्च यत् सस्पृहं**
**नेत्राभ्यां किल चुम्बितं स्मितलसद्बालप्रवालाधरम्।**

तस्मिन् कृष्ण! मुखे जगत्त्रयमहो तां दर्शयित्वा पुनः
स्तब्धां वीक्ष्य तुषारसारविशदो हासश्च सोऽङ्गीकृतः।।५५।।

### सहृदयहृदयप्रकाशः

अत्र स्नुतेतिपदैकदेशेन मातुर्यशोदाया अपारवात्सल्यं व्यज्यते। येन मुखेन हे कृष्ण! प्रस्रवद्दुग्धामृतं मातुः स्तनयुगलं सस्पृहं यथा स्यात् तथा पुनः पुनः पीतम्। अत्र सस्पृहं मुहुरिति क्रियाविशेषणाभ्यां भगवतोऽपि भक्तेषु तथाविधैव प्रीति र्व्यज्यते। तथा यत् स्मितेन मन्दहासेन लसन् बालविद्रुम इव शोणप्रभोऽधरो यस्मिन् तथाविधं मुखं मातुरेव नेत्राभ्यां चुम्बितं सतृष्णं विलोकितं तस्मिन्नेव मुखे जगत्त्रयं तां प्रदर्श्य जडीभूताञ्च विलोक्य तुषारतत्त्वमिव स्वच्छः स त्रिभुवनविमोहनशीलो हासः स्वीकृतः। अहो! अपारकरुणाराशिर्भवान् यत् प्रपन्नजनभक्तिरसान्तरायमपि निवारयतीति वस्तु व्यज्यते। उपमालङ्कार।।५५।।

### भाषानुवाद

हे कृष्ण! आपके जिस मुख ने वात्सल्यातिरेक के कारण स्वयम् दुग्ध सरने वाले माता यशोदा के दोनों स्तनों का पान किया था और नये विद्रुम के समान लाल अधर वाले जिस मुख को आपकी माता ने ही सतृष्ण देखा था उसी मुख में आप उन्हें तीनों लोकों को दिखाकर घबराती देख त्रिभुवन को विमोहित कर दने वाले तुषार के तत्त्व के समान स्वच्छ हास को स्वीकार कर लिया था। अपनी माया से आपने उन्हें पुनः वात्सल्यरस से आप्लावित कर दिया था। धन्य हैं आप प्रभो!।।५५।।

तन्वङ्गीं नयनान्तभङ्गिविवलन्मुग्धाननां कौमुदी-
कान्तिं कोमलकम्रमन्दहसितैस्तारं निराकुर्वतीम्।
राधां स्वीयकलामिव प्रणयिनीमङ्के धृतामप्यहो
हित्वाऽऽयासि विभो! प्रपन्नमवितुं कोऽन्योऽस्ति तुल्यस्त्वया।।५६।।

### भाषानुवाद

हे प्रभो! नेत्रों के प्रान्तभाग की भङ्गिमा से चल एवम् मनोहर मुख वाली तथा कोमल और कमनीय मन्द हासों के वैशद्य से पूर्णतः चन्द्रिका की कान्ति को भी दूर करने वाली अपनी प्रेयसी कृशाङ्गी राधा को अपनी कला की तरह अङ्ग में धारण करके भी उनका त्याग करके आप प्रपन्नों की रक्षा के लिए चले आते हो। हे भगवन्! इस प्रकार यहाँ आपके समान कौन हो सकता है।।५६।।

**सा शोणाधरपल्लवामृतसितच्छाया तदाप्लावित-**
**प्रेमालापमधु प्रहासमहितो लोलावलोकश्च सः।**
**ते ते कृष्ण! विमुग्धगोपवनितासङ्गोल्लसद्विभ्रमा**
**आनन्दाय सदा भवन्तु रसिके योषिद्विलासा इव।।५७।।**

### सहृदयहृदयप्रकाशः

अत्र तच्छब्दैरनुभवैकगोचरा अर्थाः प्रतिपाद्यन्ते। हे कृष्ण! रक्ताधरोष्ठपल्लवे विद्यमानस्यामृतस्य विशदा कान्तिः। अत्र विषयिणाऽमृतेन विषयस्य स्मितस्य निगरणात् कान्तेर्वैशद्यमुक्तमस्ति। तया कान्त्याऽऽप्लावितः प्रीतिसहित आलाप एव मधु तथा प्रकृष्टहासेन पूजितो चञ्चलावलोकस्तथा विमुग्धानां तव माधुरीरसापहृतचेतनानां गोपाङ्गनानां सङ्गेनोल्लसन्तो विलासाः। सर्वे तव अनुभवैकगम्या आनन्दाय सदा भवन्तु। ममानन्दानुभवस्त्वदीय-शोभासंभारव्यापृतेरन्यस्मात् कारणाद् माभूदित्यभिप्रायः। कथम्? अङ्गनाविलासरसिके विषयिणि पुरुषे नारीणां विलासा इव।।५७।।

### भाषानुवाद

हे कृष्ण! भक्ति के तरङ्गोल्लास में ही अनुभव की जाने वाली आपके लाल अधरपल्लव की वह लोकोत्तर स्वच्छ कान्ति और उससे ही आप्लावित वह प्रेमालाप तथा वही अनुभवैकगोचर प्रकृष्ट हास से पूजित चञ्चल दृष्टि एवम् अत्यन्त मुग्ध हुई गोपाङ्गनाओं के साथ

आपके वे लोकोत्तर विलास, ये सभी मेरे आनन्द के लिए हों! वैसे ही जैसे सांसारिक रसिक पुरुष के लिए स्त्रियों के विलास आनन्ददायक होते हैं। तात्पर्य यह है कि भगवद्विभावानुभावों के माध्यम से ही कवि को आनन्द अभीष्ट है, सांसारिक वस्तुओं से नहीं॥५७॥

**आसारेण सुधांशुकान्तिसिचया सिक्ता तनूश्चालकै-**
**र्गण्डश्रीर्दशनच्छविश्चरणयोर्लोला गतिश्चाद्भुता।**
**दृष्टिः प्रेमरसार्द्रपक्ष्मतरला वंशी च मुग्धस्वना**
**वैदग्ध्यप्रचुरा चला च भणितिः कृष्णस्य लोकोत्तरा।।५८।।**

### भाषानुवाद

भगवान् श्रीकृष्ण का चन्द्र की कान्ति के समान वस्त्रों से आवेष्टित और वर्षा से भीगा हुआ शरीर, घुँघराले बालों से उपलक्षित गालों की शोभा, दाँतों की कान्ति, चरणों की चञ्चल गति, उनकी अद्भुत दृष्टि जो प्रेमरस से भीगी पलकों से चञ्चल हो गयी है तथा अतीव सुमधुर तान वाली बाँसुरी एवम् वैदग्धीप्रचुर चलायमान उनकी वाणी, सभी लोकोत्तर (अलौकिक) हैं। ऐसे में उनके प्रति कौन प्रणत नहीं होगा?॥५८॥

**कालिन्दीजलमेचकच्छवितितिप्रक्रान्तसन्ध्यारुण-**
**च्छायास्निग्धनिकुञ्जमध्यविलसल्लोलाननां राधिकाम्।**
**आलिङ्गन् तरसान्यगोपवनितां वीक्ष्यागतां सुस्मित-**
**स्फीतस्विन्नमुखं सदाऽस्तु कलयन् कृष्णः सतां श्रेयसे।।५९।।**

### सहृदयहृदयप्रकाशः

श्रीकृष्णः सत्पुरुषाणां नित्यं कल्याणाय भवतु। कथम्भूतः? आह—कालिन्द्या जलस्य नीलच्छविपरम्परायां प्रकृष्टतयाक्रान्तया सन्ध्यायाः शोणकान्त्या सरसस्य लतागृहस्य मध्ये विलसन्तीं चञ्चलवदनां राधिकामालिङ्गन् तथा तस्मिन्नेव समये झटिति

समागतामन्यस्त्रीं दृष्ट्वा शोभनमन्दहासस्वच्छं स्वेदसमाकुलं मुखं दधत्॥५९॥

भाषानुवाद

कालिन्दी के जल की नीली कान्तियों से और सन्ध्या की लाल कान्तियों से युक्त, अत एव सरस रमणीय झुरमुटों के बीच विराजमान सुन्दर मुख वाली राधा का आलिङ्गन करते हुए श्रीकृष्ण जब वहीं आयी हुई अन्य गोपिका को देखते हैं तो उनका मुख सुन्दर मन्द हासों से स्वच्छ और पसीनों से तर हो जाता है। ऐसे भगवान् श्रीकृष्ण सदैव सत्पुरुषों का कल्याण करें॥५९॥

**कालिन्द्या विमले जले चलतया विभ्राजमानामहं**
**छायां रम्यविलासहासलसितां कृष्णस्य तां चिन्तये।**
**यां वीक्ष्य प्रमदोपलालितवपुःशोभाः कुमार्यस्तदा**
**वेपन्ते त्रपया निमील्य नयने स्वाङ्गे निगूहन्ति च।।६०।।**

सहृदयहृदयप्रकाशः

प्रकृष्टमदेन अथवा श्रीकृष्णप्राप्त्युद्देश्यकक्रियमाण-व्रतोपजातेनानन्देनोपलालिता शरीरशोभा यासां ता व्रजकुमार्यो वृक्षस्थितस्य श्रीकृष्णस्य यां छायां यमुनाजले दृष्ट्वा लज्जया कम्पन्ते न तु शैत्येन तथा नेत्रे निमील्य कुचाद्यवयवगोपनधिया निजाङ्ग एव निगूहन्ति संकुचिता भवन्ति तां छायां प्रतिबिम्बं चिन्तये॥६०॥

भाषानुवाद

भगवान् को प्राप्त करने के लिए व्रज की कुमारियाँ व्रत करती हैं और वे कालिन्दी के निर्मल जल में नङ्गी स्नान कर रही हैं। उसी समय निर्मल जल में भगवान् का रमणीय विलासों से सुशोभित प्रतिबिम्ब दिखायी देता है। जिसे देखकर प्रमद-रस से अनुप्राणित शरीर की शोभा से सम्पन्न कुमारियाँ लज्जा से काँपने लगती हैं

और आँखे मूदकर अपने अङ्गों में ही छुपने लगती हैं। मैं उसी लोकोत्तर भगवत्प्रतिबिम्ब का चिन्तन करता हूँ॥६०॥

**सा रात्रिश्चलमल्लिका मृदुतमा स्निग्धाम्बुवातोदरा**
**लक्ष्मीवक्त्रशरत्प्रभाप्रमुदितो नूत्नः प्रियश्चन्द्रमाः।**
**गोपीनिर्वृतिसंविधानरसिको वेणुस्वनस्तादृशः**
**सर्वे माधव! ते गताः क्व भवता सार्धं परित्यज्य गाम्।।६१।।**

**सहृदयहृदयप्रकाशः**

भावनायामपरोक्षतया श्रीमद्भगवद्व्यवहृतिं निभालयतः कवेर्बहिस्तामपश्यतो व्यथाऽऽविष्क्रियते सेति। हे माधव! तवानुपमविहारसहाया निशाप्रभृतयः केचन विभावा उद्दीपनाख्या अन्य एवासन्। ते सर्वेऽपि भवता सह इमां भारतभूमिं परितस्त्यक्त्वा कुत्र गताः? हा हन्त! तेषामप्यभावे सर्वथा विनोदनासंभवात् क्षणमप्यत्र भक्तैःस्थातुं न शक्यत इति ध्वनिः। के ते सहायाः? आह—चञ्चला मल्लिकालता यत्र, अत एवातिशयेन मृदुस्तथा मसृणजलैराप्लावितानि वातपूर्णानि उदराणि आभ्यन्तरभागा यस्याः सा प्रसिद्धा रात्रिर्यस्यान्तव रासोऽभूदिति भावः। तथा च लक्ष्मीमुखमिव शरदः प्रभा, तया प्रमुदितो नूतनः, अत एव प्रियश्चन्द्रः। एवञ्च गोपीनां प्रमदरसस्य सम्यग् विधाने रसिकस्तथाविधो वंशीध्वनिः॥६१॥

**भाषानुवाद**

इस पद्य में करुण रस का पुट है। हे माधव! जिसमें सरस यामुन जलों से मिश्रित पवन बहते थे, ऐसी वह चञ्चल मल्लिका-लताओं वाली रजनी, लक्ष्मी के मुख के समान शरद् ऋतु की कान्ति से फुदकने वाला वह नया प्रिय चन्द्रमा तथा गोपियों के आनन्द के अनुभावन में रसिक आपकी वंशी की वह मधुर तान, ये सभी इस पृथ्वी का परित्याग करके आपके ही साथ कहाँ चले गये?

ऐसी अवस्था में हे भगवन्! एक क्षण गुजारना भी पहाण हो गया है, यह अभिप्राय है॥६१॥

विरम विरम चन्द्र! स्निग्धशुभ्रान् मयूखान्
न किर भुवि च मेघ! त्वं किलापो न मुञ्च।
मलयपवन! दूरे तिष्ठ कालिन्दि! पूरे
न वह स हि विहायाऽस्मान् मुरारिः प्रयातः।।६२।।

**सहृदयहृदयप्रकाशः**

वृन्दावने मुरमथनमप्राप्य निर्विण्णः सन् चन्द्रादीन् स्वकार्यकरणाय प्रतिषेधति विरमेति। हे चन्द्र! विरतो भव। पृथिव्यां सरसान् शुभ्राँश्च किरणान् न किर! तथा हे मेघ! त्वं जलानि न त्यज! मलयानिल! दूरे त्वं तिष्ठ! यमुने! त्वमपि प्रवाहे न वह! यतो हि मुरारिरस्मान् कृपणान् त्यक्त्वा प्रयातः, न तु प्रयाति। तद्विरहितस्य मम कृते यूयं सर्वेऽपि पावकज्वालायमाना एवेत्यभिप्रायः॥६२॥

**भाषानुवाद**

वृन्दावन में भगवान् को न प्राप्त करके खिन्न कवि का यह वचन है। हे चन्द्र! अब तुम विरत हो जाओ! सरस और स्वच्छ अपनी किरणों को पृथ्वी पर मत बिखेरो! हे मेघ! अब तुम भी जल का वर्षण मत करो! हे मलयाचल के पवन! तुम दूर ही रहो! कालिन्दि! तुम भी प्रवाह में बहना बन्द करो! क्योंकि मुरारि आज हमें छोड़ कर चले गये हैं। जब अपने प्यारे माधव ही साथ नहीं हैं तो आप लोगों का क्या काम? यह अभिप्राय है॥६२॥

वनं वृन्दाख्यं तत् तनुतरुलतोद्भासि मसृणं
तटं कालिन्द्याश्च स्रवदमृतपूरेण शिशिरम्।
अहो शैलं पुण्यं निजकरधृतं पक्षिविरुतं
क्व यातो हा कृष्ण! क्वथितमिव कृत्वा सरभसम्।।६३।।

**सहृदयहृदयप्रकाशः**

तन्वीभिस्तरुवेष्टिताभिर्लताभिरुद्भासनस्वभावमत एव मसृणं स्निग्धं तत् स्वलीलया कृतार्थीकृतं वृन्दावनम्, तथा यमुनायाः पावनत्वादेव सरत्सुधाप्रवाहेण शीतलं तटम्, अपि च पतत्रिविरुतानि सन्त्यत्र तथाभूतं स्वकीयेनैव करेण महत्त्वापादनबुद्ध्या धृतं गोवर्धनाख्यं शैलं उष्णोदके क्वथितमिव विधाय हे कृष्ण! क्व प्रयातोऽसि हा!। उत्प्रेक्षालङ्कारः।।६३।।

**भाषानुवाद**

यहाँ पर भी कवि का विलाप ही प्रधानतया अभिव्यक्त हुआ है। हे भगवन्! मुरमथन! वृक्षों में लिपटी हुई पतली लताओं से उद्भासित होने वाले सरस उस वृन्दावन को, अमृत-प्रवाह को बहाने वाली शीतल उस कालिन्दी के कूल को तथा पक्षियों के कलरव से कूजित, अपने ही हाथों से धारण किये गये उस पुण्य गोवर्धन पर्वत को आप आज अकस्मात् गरम पानी में उबलते जैसा बना कर कहाँ चले गये हो?।।६३।।

**स्रवत्पीयूषाभ्यां किसलयमृदुभ्याञ्च विपिने**
**भ्रमन् पद्भ्यां पद्मा स्पृशति चकिता यौ च सदयम्।**
**त्वमाक्रान्तःशान्तो भवसि सततं कण्टकचयै**
**रुदन्ति क्लिष्टास्ते स्थिरचरजना ये प्रणयिनः।।६४।।**

**सहृदयहृदयप्रकाशः**

हे कृष्ण! किमपि विधातुं त्वं स्वतन्त्र इति तु सत्यम्, तथापि प्रणयिजनभावनाया आदरस्त्वया विधातव्य इत्येव वस्त्वत्र प्राधान्येन प्रतिपिपादयिषितम्। पद्यन्तु सुस्पष्टाभिप्रायत्वाद् व्याख्यानानपेक्षम्।।६४।।

**भाषानुवाद**

हे भगवन्! कलियों के समान कोमल और अमृतरस को बहाने वाले उन चरणों से जङ्गल में आप भ्रमण करते हुए आक्रान्त होकर

भी शान्त हो जाते हैं जिन्हें लक्ष्मी भी चकित होकर करुणा के साथ स्पर्श करती हैं कि कहीं वे पीडित न हो जाँय। किन्तु जो आपके प्रेमीजन हैं वे स्थावर और जङ्गम प्राणी क्लेश पाकर रोते हैं। आपकी पीडा उनसे नहीं देखी जाती। यहाँ कवि का यह अभिप्राय है कि भगवान् वैसा ही आचरण करें जिससे उनके भक्तों को सुख हो॥६४॥

**विहारायासैस्ते कुवलयतुषारातिमसृणा**
**मुखस्वेदच्छाया दिनकरकरैश्चीयत इव।**
**पदव्याप्ता रेणुश्च नलिनपरागप्रतिकृति-**
**र्द्विरेफैः सोल्लासं भुवि विजयते लिह्यत इव॥६५॥**

**भाषानुवाद**

हे माधव! वृन्दावन में विचरण करने के कारण उत्पन्न हुए श्रम से आपके मुख पर आये स्वेद (पसीना) की कान्ति वैसी ही झलकती है जैसी पल्लवों के ऊपर पड़ी अतीव सरस ओस की बूँदे झलकती हैं। यही लगता है कि मानो सूर्य अपने करों (किरण, हाथ) से उसका चयन कर रहे हों। आप के चरणों में कमल के परागों की भाँति व्याप्त धूलि ऐसी है मानो भ्रमर (भक्तगण) उसका आस्वादन कर रहे हों। इस प्रकार वह पृथ्वी पर लोकोत्तर प्रतीत हो रही है॥६५॥

**सरलाः शिशुतापरिष्कृतास्तरला नूतनयौवनस्पृशः।**
**अतिमुग्धतया ततस्त्रपासरसीमज्जनकातरा रतौ॥६६॥**
**प्रभवन्ति यथा सुलालिताः प्रियवृक्षैकलताश्च योषितः।**
**प्रमदप्रचुरे प्रभो! तथा त्वयि पुंसां मतयोऽप्यसंस्कृताः॥६७॥**
**युग्मकम्**

**सहृदयहृदयप्रकाशः**

हे प्रभो! आनन्दैकघने त्वयि पुरुषाणां बुद्धयो नैकप्रकारा भवन्ति। कुतः? यतो हि ता असंस्कृता दृढभजनसंस्कारसंपृक्ता न

सन्ति। यथा योषितो वनिताः शैशवेन परिष्कृताः सुशोभिताः सरला आर्जवोपेता यस्य कस्यचिदपि क्रोडे क्रीडन्ति तथा मतयोऽपि त्वदेकपरायणा न सन्तीत्यभिप्रायः। नूतनं यौवनं स्पृशन्तीति नूतनयौवनस्पृशः स्त्रियस्तरलाश्चञ्चला यथा भवन्ति नैकत्रावस्थानं लभन्ते तथा पुंसां मतयोऽपि त्वयि प्रगाढनिष्ठा न भवन्ति। एवमग्रे रतौ प्रीतिविषये सुरतसंपादने वा अतीव मौग्ध्यस्वाभाव्यात् ता लज्जा एव सरसी अल्पसरस्तत्र मज्जनेन हेतुना कातरा भवन्ति। मतयोऽप्येवं भक्तिमार्गे प्रविशन्त्यः कातरा भवन्ति किं वक्ष्यन्ति निर्विशेषब्रह्मवादिन इति। ता एव ललना यदा सुष्ठुरूपेण लालिता नानावैचित्र्यानुवेधपूर्णरसिकवार्ताभिर्विश्वासं प्रापिता भवन्ति तदा विदितसुरतरसाःसत्यः प्रिय एव वृक्षस्तस्यैकलता भवन्ति। एतेन स्वप्नेऽपि तासामन्यपुरुषान् प्रति रुच्यभावो नैरन्तर्येण सुरतविशेषान् प्रति गाढौत्कण्ठ्यञ्च व्यज्यते। मुग्धस्वभावा हि युवतयः प्रथमसमागमे बलादुपभुक्ता आजीवनं सुरतनिःस्पृहा भवन्तीति भगवान् वात्स्यायनः। अत एव सरसतापादनपुरःसरमेव तास्तत्र प्रवर्तनीया इति तदनुशासनम्। मतयोऽपि भगवच्छास्त्रानुशीलनसप्रत्ययास्तदेक-परायणा भवन्ति। उपमाकाव्यलिङ्गप्रभृतयोऽलङ्कृतयः॥६६-६७॥

### भाषानुवाद

यहाँ भगवान् की भक्ति में बुद्धि की क्रमिकता का दर्शन कराया गया है। हे प्रभो! जिस तरह स्त्रियाँ बाल्यकाल में शिशुता से भूषित होकर सरल होती हैं और जब उनमें नवीन यौवन का उदय होता है तो चञ्चल हो जाती हैं। पश्चात् अतीव विमुग्ध स्वभाव होने के कारण रमण के साथ सम्पर्क होने पर भी कामक्रीडा में कातर रहती हैं क्योंकि उस समय वे लज्जा की तलावड़ी में डूबती रहती हैं। कालक्रम से जब वे बार-बार ठीक से दुलारी जाती हैं तो प्रियतम रूप वृक्ष की लतायें हो जाती हैं। अपने प्रियतम से संश्लिष्ट होकर कभी भी उनसे अलग नहीं होतीं। इसी तरह आनन्दघन आपमें भी

पुरुषों की असंस्कृत बुद्धि भी रहती है। बुद्धि भी बाल्यकाल में भगवान् के प्रति सरल रहती है तथा यौवन में चञ्चल हो जाती है। तथा च, पश्चात् उसमें कातरता आ जाती है। शास्त्राभ्यास के बल से संस्कृत होकर पूर्णरूप से भगवन्निष्ठ हो जाती है॥६६-६७॥

**मुग्धस्मेरं स्मरारेरलकवनसरज्जाह्नवीव स्मितं ते**
**कालिन्दीवाक्षिनीलच्छविचलवितविततिश्चैक्यमायाति यत्र।**
**संक्रान्तस्फारशोणाधरमधुररुचौ सङ्गमे तत्र कृष्ण!**
**क्रीडाया मेऽवकाशं वितर सकरुणं लोकबन्धुर्यतोऽसि।।६८।।**

### सहृदयहृदयप्रकाशः

हे कृष्ण! यस्मात् कारणात् त्वं लोकानां बन्धुरसि तत एव हेतोस्तस्मिन् सङ्गमे मम क्रीडावकाशं सदयं देहि यत्र तव मुग्ध इषद्विकसितश्च मन्दहासः पुरारिकेशकलापे सरन्ती गङ्गेव तथा नयनयो र्नीलकान्तिचलच्छटा यमुनेव ऐक्यमायाति आगच्छति तथा यत्र विस्तृता शोणा लोहिता अधरस्य माधुर्योपेता रुचिःकान्तिः सङ्क्रान्ता वर्तते। अत्र स्मरारिकेशेषु सरन्त्या गङ्गाया अपीषद्विकास एवास्ति। तथा च भगवन्मन्दहासोपमानस्यौचित्यमेवोच्यते। उपमामूलकव्यतिरेकालङ्कारः॥६८॥

### भाषानुवाद

हे कृष्ण! आप पूरे संसार के बान्धव हैं, अतः दया करके उस सङ्गम में मुझे खेलने का अवसर प्रदान करें जहाँ भगवान् शिव के जटाजाल में बहने वाली गङ्गा के समान आपकी अतीव मनोहर थोड़ी विकसित मुस्क्यान और यमुना के समान आपके नयनों की नीली कान्ति का चञ्चल विस्तार एक हो जाता है तथा सरस्वती के स्थान पर आपके लाल अधर की मधुर कान्ति प्रतिबिम्बित रहती है॥६८॥

वात्सल्याब्धिप्रमग्ना पथि निजनयने निर्मलाश्रुप्रताने
कुर्वाणा त्वन्निमित्तस्नुतकुचकलशा गोपिका गोपवक्त्राद्।
श्रुत्वा नायास्यतीति क्रकचविलुलिते चेतसीव प्रभूतं
ज्वालाजालं यथाप्ता मधुमथन! तथाऽऽधीयतामान्तरे मे।।६९।।

**सहृदयहृदयप्रकाशः**

हे मधुमथन! वात्सल्यसागरे पूर्णमग्ना तथा निर्मलाश्रूपेतं प्रतानं विस्तारो ययोस्तथाभूते नयने मार्गे कुर्वाणा त्वामेवोद्दिश्य स्नुतौ कुचकलशौ यस्याः सा यशोदा नन्दमुखात् तव मथुरातोऽनागमनं श्रुत्वा क्रकचेन भिन इव चेतसि येन प्रकारेण ज्वालाव्यूहं प्राप्ता तेनैव प्रकारेण मम मनसि समुद्भावय। अवश्यमेवैवं मयि ते भूयसी कृपा स्यादित्यभिप्रायः। उपमोत्प्रेक्षाप्रभृतयोऽलङ्कृतयः।।६९।।

**भाषानुवाद**

हे मधुमथन! आप जब अक्रूर के साथ गोकुल से मथुरा चले गये थे तब गोपी यशोदा जी वात्सल्य के सागर में डूबी हुई निर्मल आँसुओं के वितान वाले अपने नयनों को रास्ते में गड़ायी थीं। उस समय आपको पिलाने के लिए उनके स्तनकलशों से दूध भी झर रहा था। ऐसी अवस्था में मथुरा से लौटे नन्द के मुख से जब उन्होंने सुना कि अब आप नहीं आयेंगे तब उनका हृदय ऐसा हो गया था जैसे उसे कोई आरे से छिन्न-भिन्न कर दिया हो। उनके हृदय में उस समय जैसी ज्वालायें भभकीं वैसी ही ज्वालायें भगवन्! मेरे अन्तर्मन में भी भभका दो!।।६९।।

कन्दर्पानन्तदेहप्रविततसुषमाचारुसोपानपङ्क्तौ
पादौ न्यस्य प्रभो! त्वं शिशुरिव जगतीमागतो दाम्नि मात्रा।
बद्धो गव्यस्य हेतोरतिरसिकतया मुग्धगोपाङ्गनाभिः
साकं रासञ्च कृत्वा तदनु च कृपणान् हा विहाय क्व यातः।।७०।।

### सहृदयहृदयप्रकाशः

हे प्रभो! कामस्यासंख्येयशरीरेषु प्रकृष्टतया विस्तृता या शोभा तद्वन्मनोहरायां सोपानपरम्परायां पादौ न्यस्य संस्थाप्य त्वं शिशुरिव, न तु शिशुरेव जगतः कारणकारणत्वात् अत्रागतः सन् हैयङ्गवीनस्य कारणाद् मात्रा बन्धने बद्धस्तथा गोपिकाभिः सह रासं विधाय। तत्र रासे नैसर्गिकत्वापादनार्थमेवोच्यते-अतिरसिकतयेति। नित्यमुक्त-शुद्धस्वभावस्य भगवतो रसिकताऽपि प्रपन्नान् सुखयितुमेव। यद्येवं तर्हि अस्मान् दीनान् त्यक्त्वा क्व यात इति साकूतमाक्षेपः। नैतद् युज्यते भवत्पलायनमित्यभिप्रायः।।७०।।

### भाषानुवाद

हे प्रभो! अनन्त कामदेवों की व्यापक शोभा की सुन्दर सोपान-परम्परा में अपने चरणों को रखकर आप शिशु की तरह इस संसार में आये और नवनीत के कारण माता के द्वारा बन्धन में भी बाँधे गये तथा अत्यधिक रसिकता के निमित्त ही प्रमुग्ध स्वभाव वाली गोपसुन्दरियों के साथ रसमय रास भी किया। यह सब करके हम दीनों का परित्याग करके आप कहाँ चले गये?।।७०।।

**गण्डप्रान्तप्रसरदलकैर्दन्तकुन्दैश्च हासै-**
**र्मुग्धालोकं नवमिव दधद् वक्त्रमक्ष्णोर्विलासैः।**
**लिप्ते पुष्पप्रकरमधुभिः स्वच्छपङ्काङ्गरागे**
**सोल्लासं त्वं व्रजयुवतिभिः कृष्ण! कुत्रासि भागे।।७१।।**

### सहृदयहृदयप्रकाशः

हे कृष्ण! कुसुमनिकराणां मधुभिः सारांशैः लिप्ते, अत एव स्वच्छपङ्क एवाङ्गरागो यत्र तथाभूते कुत्र भागे व्रजाङ्गनाभिः सह त्वमसि? कथन्न मम दृष्टौ विभासीत्यभिप्रायः। आदितःपादद्वयेन श्रीकृष्णमेव विशिनष्टि-कपोलप्रान्तभागयोः प्रसरद्भिश्चूर्णकुन्तलैस्तथा दन्ताःकुन्दानीव यत्र तथाभूतै र्हासैः पुनश्च नयनयोर्विलासैः मुग्ध

आलोकः प्रकाश आलोकनं वा यत्र तथाभूतं नूतनमिव वदनं दधत्।।७१।।

### भाषानुवाद

हे कृष्ण! गालों तक विखरे घुँघराले बालों से और अपने उन हासों से जिनमें दाँत कुन्द के समान झलक रहे हैं तथा अपने नयनों के विलासों से आप मनोहर आभा वाले नूतन जैसे मुख को धारण करते हुए व्रजयुवतियों के साथ उल्लासपूर्वक क्रीडा करते हुए फूलों के सारतत्त्वों से व्याप्त तथा स्वच्छ कर्दम (काँदो) अङ्गराग हो जहाँ, ऐसे किस भाग में विद्यमान हैं? क्यों नहीं मेरी दृष्टि के समक्ष होते?।।७१।।

**चञ्चच्छायामृदुपदयुगं कृष्ण! लोलं क्षिपँस्त्वं**
**प्रालेयाभस्मितमविरतं नेत्रमुन्मीलयँश्च।**
**शोणाङ्गुष्ठं तनुरसनया लेढुकामस्तदानीं**
**मात्रा दृष्टः स्फुटमिव हसन् कं न चित्रीकरोषि।।७२।।**

### सहृदयहृदयप्रकाशः

हे कृष्ण! चञ्चत्कान्त्योपलक्षितं सुकुमारपदयुगलं लोलं यथा स्यात् तथा क्षिपन् तथा नयनं मिहिकाभं स्मितं मन्दहासो यत्र तद् यथा स्यात् तथा नित्यं विकासयन् तथा बाल्यादेव कारणात् तनुरसनया रक्तकान्तिमङ्गुष्ठं लेढुं कामो यस्य तथाभूत एव यशोदया विलोकितो विकसितमिव हासं कुर्वन् कं जनं नाश्चर्यचकितं करोषि। ब्रह्मादीनपि विमोहयसीत्यभिप्रायः।।७२।।

### भाषानुवाद

हे कृष्ण! शिशुरूप में अवस्थित होकर आप फैल रही कान्ति से उपलक्षित अतीव मुलायम अपने चरणयुगल उछालते हैं और तुषार की भाँति स्वच्छ मन्दहास के साथ ही निरन्तर नयनों को विकसित करते हैं तथा अपने लाल अगूठे को पतली जिह्वा से

चाटना चाहते हैं तभी माता यशोदा की दृष्टि आपके ऊपर पड़ती है और आप सुस्पष्ट हास प्रस्तुत कर देते हैं। भगवन्! ऐसा करके आप किसको आश्चर्यसागर में नहीं डुबो देते?॥७२॥

त्वय्यायाते भुवि तरुवरश्यामतालङ्कृतायां
स्वेच्छाचारा सकलसुषमा माधुरी चापि मुग्धा।
कान्तिप्राया सुललितपदा भारती श्रीश्च नित्यं
सेवन्ते त्वां पुनरहमहो कृष्ण! कस्माद् विमूढः।।७३।।

**सहृदयहृदयप्रकाशः**

हे कृष्ण! श्रेष्ठानां वृक्षाणां श्यामतया भूषितायां पृथिव्यां त्वयि आगते सति स्वेच्छाचारा न त्वन्येच्छया विहरणशीला सकला एव शोभा तथा मौग्ध्यगुणोपेता माधुरी। एवमेव कान्ति दीप्तर-सत्वमौज्ज्वल्यञ्च प्रायो यत्र तथा सुललितानि पदानि सुप्तिङन्तरूपाणि पादविक्षेपाश्च यस्यास्तथाभूता भारती सरस्वती श्रीर्लक्ष्मी चेति सर्वे त्वां सेवन्ते भजन्ते यदा तदाऽहमेव कस्मात् कारणाद् विशेषेण मूढ़ः? कथन्न भजामि?॥७३॥

**भाषानुवाद**

हे कृष्ण! श्रेष्ठ वृक्षों की श्यामता से विभूषित व्रजभूमि में जब आपका आगमन होता है तब यथेच्छ आचरण करने वाली सारी शोभा, मुग्ध हुई मधुरिमा तथा कान्ति नामक गुणों से परिपूर्ण अतीव ललित पदों वाली भारती (वाणी) और श्री, ये सभी चैतन्य हुए आप का ही सेवन करने लगते हैं। ऐसे में आपही बताइये कि मैं ही इस विषय में अत्यन्त मूढ क्यों हो गया हूँ? आपकी सेवा न करके मैं क्यों संसार-गह्वर में पड़ा हूँ भगवन्!, यह अभिप्राय है।।७३।।

संसारे क्षीणसारे सुरमुनिनिचयान् पूतसत्त्वान् विधातु-
र्धातुस्ते बालरूपं सुललिततरलं कीदृशी वाऽनुभूतिः।

अन्तर्यामित्वदोषादनुभवविमुखश्चेत् त्वमेवासि तान्ति-
च्छेदासक्तस्तदा मे हरसि च न कथं कृष्ण! कामाग्निमालाम्।।७४।।

भाषानुवाद

हे कृष्ण! जब संसार निःसत्त्व हो जाता है तब आप सारे सुर-मुनियों के मानस को परिपूत करने के लिए प्रथमतः अतीव मनोहर और चञ्चल बालरूप ही धारण करते हैं। उस रूप में आपकी कैसी अनुभूति होती है? यदि इस पर आप यह कहें कि मैं तो अन्तर्यामी हूँ, मुझे भला कैसी अनुभूति होगी? तो भगवन्! आप ही लोगों की सांसारिक व्यथाओं के छेदन में लगे रहते हैं। ऐसे में मेरी कामनाओं की कतार जो लगी हुई है उसका हरण आप क्यों नहीं करते? क्यों नहीं अपने चरणों में मुझे लगाते भगवन्!।।७४।।

त्वद्वंशीकलगुञ्जिते कुमुदिनीपुञ्जस्फुटोन्मीलिते
वृन्दारण्यवरे रणद्रसनया मुग्धा अगु गोंपिकाः।
एका कापि च रक्षिणा बलवता रुद्धा भवन्तं विना
संच्छिन्नाखिलवासनाभ्रपटला मुक्ता वराकी त्वया।।७५।।

सहृदयहृदयप्रकाशः

वृन्दानां तुलसीनामेव प्रधान्यादन्यारण्यापेक्षया वरे श्रेष्ठेऽरण्ये तव वेणुवाद्याव्यक्तनादगुञ्जिते तथा कुमुदिनीनां पुञ्जं समुदायः स्फुटं यथा स्यात् तथोन्मीलितं विकसितं यत्र तथाभूते सति मुग्धा गोपवनिता रणत्काञ्चीदामोपलक्षिता अगुः। अत्र भगवता सह विहर्तुं गोपीगमने मौग्ध्यस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः। तथा च तद्गमनस्यौचित्यं ध्वन्यते। तत्रैका गोपी बलवत्तरदुरदृष्टवशादेव बलवता तच्चारित्र्यरक्षिणा गृह एव रुद्धा। भगवद्भजनमार्गे कश्चिदवरोधककण्टकसद्भावो यदि तर्हि स दुरदृष्टविपाक एवेति मन्तव्यम्। हे भगवन्! सा वराकी भवन्तं विना सम्यग्रूपेण छिन्ना निखिलवासना मेघपटल इव यया सा तथाभूता सती त्वया मुक्ता

त्यक्तेत्यधिक्षेपः। निर्विशेषप्रत्यग्रूपस्वस्वरूपप्राप्तिरूपां मुक्तिं प्राप्ता यद्यपि तथापि सा तव माधुरीविलासरससम्पद्बहिर्भूतैव जाता, यत्र निमित्तं त्वमेव। अहो! तदीयं दौर्भाग्यमवर्णनीयमिति गम्यते। अथवा या गोपिका भवन्तमुद्दिश्य संच्छिन्नाखिलवासनाभ्रपटला जाता सा सर्वकालं भवतैव त्यक्ता, अहो, भगवन्! एतादृग्निष्ठुरो भवान् ननु तस्या दीनाया कृत इति वराकीपदेन व्यज्यते।।७५।।

हे भगवन्! वृन्दा अर्थात् तुलसी का वन होने से अन्य वनों की अपेक्षा वह श्रेष्ठ है। वह वन जब आपकी वंशी के रव से गुञ्जित हो उठा और वहाँ कुमुदिनी का समूह विकसित हुआ तब मुग्ध हुईं सारी गोपियाँ अपनी मेखलाकलकल के साथ चल दीं। वहाँ कोई एक गोपी ऐसी भी थी जिसका बलवान् रक्षक उसे आप के पास जाने नहीं दिया और उस विचारी ने आपके विना मेघपटल के समान अपनी सारी वासनाओं का ही छेदन कर दिया। आपने उसे मुक्त कर दिया? क्या यह उचित है? आपके विना जो सब कुछ सांसारिक मूल का ही त्याग कर दे उसे आप त्याग दें, यह उचित नहीं, यह अभिप्राय है। यहाँ 'मुक्ता' पद से मुक्ति और त्याग, दोनों अर्थों की विवक्षा है।।७५।।

**आरामे रमणीयकान्तितरलो वीक्ष्याङ्गनाः सत्त्वरं**
**जानुभ्यां जवकिङ्किणीक्वणतया लोलं व्रजन् माधवः।**
**मातुश्चाङ्कमुपेत्य वक्षसि मुखं तस्मिन् क्षणे गोपितं**
**तिर्यक्कृत्य पुनर्जहास मसृणज्योत्स्नाप्रसारोज्ज्वलम्।।७६।।**

**भाषानुवाद**

नन्द के प्राङ्गण में रमणीय कान्ति से चञ्चल भगवान् श्रीकृष्ण वहाँ आयी अन्य स्त्रियों को देखकर अपनी करधनी की क्षुद्र घण्टिकाओं को बजाते हुए घुटनों के बल ही तेजी से चलने लगे

और माता यशोदा की गोद में जाकर उनके वक्षःस्थल में अपना मुख छुपा लिये। उसके बाद अपने मुख को तिरछा करके स्निग्ध चन्द्रिका के समान स्वच्छ हँसी हँसने लगे। यहाँ बालस्वभाव का यथावत् वर्णन होने से स्वभावोक्ति अलङ्कार है॥७६॥

**राधाकेसरचन्दनाचितलसत्तुङ्गस्तनालिङ्गना-**
**न्नीलाकाशसमानवक्षसि विधोः सूर्यस्य बिम्बाविव।**
**मुद्राङ्कौ मधुसूदनस्य जयतो यौ वीक्ष्य रात्रौ खगाः**
**कुर्वन्ति प्रचुरं मुदा कलकलं क्राम्यन्ति तारं दिवि।।७७।।**

**भाषानुवाद**

श्री राधिका के केसर और चन्दन से व्याप्त एवम् शोभित उन्नत स्तनों का आलिङ्गन करने से भगवान् मधुसूदन के नीले आकाश के समान वक्षःस्थल में चन्द्रमा और सूर्य के बिम्ब के समान मुद्रायें अङ्कित हो गयीं जिन्हें देखकर रात में ही पक्षीगण आकाश में आनन्दमग्न होकर कलकल नाद करने लगे और उड़ने लगे। उन्हें प्रातःकाल का भ्रम हो गया। भगवान् के वे चिह्न सर्वोपरि हैं॥७७॥

**गण्डालम्बिचलालकेषु मसृणं बर्हञ्च मालां गले**
**धूलीभिश्छुरितं दुकूलममृतश्राविप्रवालाधरे।**
**वेणुं न्यस्य तव प्रभो! च दधतो भूषामपूर्वामहं**
**नेत्रापाङ्गसुभङ्गिभिः प्रचलिते याचे मुदं चेतसि।।७८।।**

**सहृदयहृदयप्रकाशः**

हे प्रभो! कपोलयोर्लम्बमानेषु चञ्चलचूर्णकुन्तलेषु स्निग्धं मयूरपिच्छं तथा गले मालां धूलिधूसरितदुकूलं तथा पीयूषवर्षणशीलप्रवालसन्निभेऽधरे वेणुं न्यस्यापूर्वां लोकोत्तरां भूषामलङ्कृतिं दधतस्तव नेत्रयोरपाङ्गयोः प्रान्तभागयोः शोभनभङ्गिभिः प्रचिलिते चेतसि मुदं याचे॥७८॥

### भाषानुवाद

हे प्रभो! गालों के ऊपर लटकने वाले घुँघराले बालों में स्निग्ध मूयूरपिच्छ और गले में माला एवम् धूलियों से व्याप्त दुकूल को धारण करके अमृत बहाने वाले प्रवाल के समान लाल अपने अधरोष्ठ में जब आप वंशी रखते हैं तो आपकी अपूर्व छटा देखते ही बनती है। उसी अवस्था में भगवन्! आपके नयनों के किनारे की भङ्गिमायें हमारे ऊपर पड़ें तथा मेरा चित्त चञ्चल हो जाय। ऐसे अपने चित्त में मैं आनन्द की कामना करता हूँ॥७८॥

**चेतसि लालसा ललतु चेत् तरलसुललितं**
**प्रेक्षितुमङ्गकान्तिनिचयं तव मुरमथन!।**
**जन्मशतानि सन्तु सततं यदि तव विषये**
**नृत्यति वासना प्रकिरती प्रणयसुमनसः।।७९।।**

### सहृदयहृदयप्रकाशः

हे मुरमथन! मदीये मनसि उत्कटाभिलाषः क्रीडतु यद्यसौ तरलानि सुष्ठुरूपेण ललितानि रतिचेष्टितानि यत्र तथाभूतं तवाङ्गानां कान्तिकलापं प्रेक्षितुं समुदेति। तव माधुरीविलोकनाय समुज्जृम्भमाणोऽभिलाषोऽपि ममाभीष्ट एव, न तु त्वद्वैमुख्येन भौतिकभोगावाप्तये प्रवर्तमान इत्यभिप्रायः। एवञ्च जन्मनां शतानि निरन्तरं मम भवन्तु यदि तत्र विद्यमाना मूलभूता वासना तव विषये प्रीतिप्रसूनानि प्रकिरती नर्तनं करोति। एतेन स्वस्वरूपावाप्ति-लक्षणमुक्त्यपेक्षया भगवदुद्देश्यकबन्धनस्य गरीयस्त्वं ध्वन्यते। तथा च व्यतिरेकालङ्कारध्वनिरप्यस्ति॥७९॥

### भाषानुवाद

हे मुरमथन! मेरे चित्त में लालसा का ज्वार उमड़े यदि वह चञ्चल और रमणीय आपके अङ्गों की कान्तियों को देखने के लिए हो। भौतिक भोगों के लिए लालसा मुझे अभीष्ट नहीं, यह अभिप्राय

है। मेरे सैकड़ों जन्म हों यदि उनमें मेरी वासना आपके विषय में प्रीति-कुसुमों को विखेरती हुई नर्तन करे। आपके प्रति वासना यदि रहे तो हजारों जन्म लेना भी मेरा सार्थक है,यह अभिप्राय है।।७९।।

**दीव्यति पादपद्मयुगलं तनुतरुवितती**
**कृष्ण! वृणाति कान्तिनिचयस्तव मृदु च वनम्।**
**हासविलासचारुसरितश्च ललितलतिका**
**आर्द्रदरानता विदधति व्रजभुवि सततम्।।८०।।**

**सहृदयहृदयप्रकाशः**

हे कृष्ण! तव चरणकमलयुगं विरलविटपिपङ्क्तौ क्रीडति। अत्र तनुतरुवितत्या गोपसमुदायो निरूप्यते। तथा तव कान्तिव्यूहो मृदु विपिनं स्तृणाति आच्छायति। वृक्षा एव वनम्। तस्य स्निग्धश्यामकान्तिस्त्वत्कान्त्या न प्रतिभासत इत्यभिप्रायः। तथा व्रजभूमौ निरन्तरन्तव हासविलासा एव रमणीयतरङ्गिण्यो ललितैरनाचार्योपदिष्टै रतिचेष्टितैरुपलक्षिता या लतिका गोपतरुण्यस्ता आर्द्रा ईषदानताश्च कुर्वन्ति। तव प्रभावभावितात्मान एव सर्वे व्रजे विलसन्ति। तथा च तेषां सौभाग्यं न वक्तुं शक्यत इति व्यज्यते। रूपकातिशयोक्तिप्रभृतयोऽलङ्कृतयः।।८०।।

**भाषानुवाद**

हे कृष्ण! आपके दोनों चरण विरल वृक्षों की कतार में क्रीडा करते हैं। यहाँ विरल वृक्षों के द्वारा गोपसमुदाय का निरूपण किया गया है। एवञ्च आपकी कान्तियों का समूह सरस वन को आच्छादित करता है। यहाँ वृक्ष ही वन के रूप में प्रतिपादित हैं। अभिप्राय यह है कि वन की स्निग्ध कान्ति भगवान् की श्यामल कान्ति से आच्छादित होकर अलग से आभासित नहीं हो पाती। व्रजभूमि में आपके वे मनोहर हास-विलासों से युक्त नदियाँ ललित लताओं को आर्द्र करके थोड़ा झुका दे रही हैं। यहाँ लताओं से गोपियों का

निरूपण किया गया है। भगवान् की प्रभा से ही व्रज का सौभाग्य है, यह अभिप्राय है। रूपक, अतिशयोक्ति आदि अलङ्कार यहाँ हैं।।८०।।

**सदैव चरणाम्बुजस्रवदहो स्वदन्ते मधु**
**प्रपन्नमधुलिट्चया अभिलषन्ति नान्यच्च ते।**
**कथं तव परिग्रहा रतमहे नतृप्ताश्च तद्**
**विहाय मदनातुरास्त्वदधरं पिबन्ति प्रभो!।।८१।।**

**सहृदयहृदयप्रकाशः**

हे प्रभो! प्रपन्नास्त्वदेकशरणा एव मधुलिहो भ्रमराः, तेषां समुदायाः सदैव तव चरणाम्बुजाभ्यां स्रवत् मधु स्वदन्ते, न तु भुञ्जते। एवञ्च ते श्रुतिस्मृतिपुराणादिप्रसिद्धगौरवं तद् विहाय नान्यत् किमपि त्वदीयमप्यन्यद् वस्तु किं पुनस्त्वच्चरणमधुपानान्तरायभूतं बाह्यं विभवजातम्, अभिलषन्ति वाञ्छन्ति। यद्येवन्तर्हि कथं तव परिग्रहाः षोडशसहस्रजाया रतमहे सुरतोत्सवे नतृप्ता अतृप्ताः सत्यस्तद् मधु त्यक्त्वा कामातुरास्त्वदधरं पिबन्ति। तासां कामार्तानां कथं तवाधरपान एव तृष्णा समुज्जृम्भते? यद्यप्यत्राधरपाने मदनातुरत्वस्य तत्र च सुरतविषयकतृप्तिराहित्यस्य हेतुत्वात् प्रश्नो न घटते तथापि समुच्चयापेक्षयैवात्र पृच्छा मन्तव्या। कथन्ता महिष्यः सुरतोत्सवे अतृप्ताः कथं मदनातुराः कथं वा तन्मधु विहाय त्वदधरं पिबन्ति? एतेन भगवन्मायाया दुस्तरत्वं व्यज्यते।।८१।।

**भाषानुवाद**

हे प्रभो! प्रपन्न अर्थात् आप की ही शरण में रहने वाले भक्तों का भ्रमरसमुदाय निरन्तर उस मधु का आस्वादन करता है जो आपके चरण कमलों से निकलता रहता है। वे प्रपन्नगण अन्य किसी वस्तु की इच्छा नहीं करते। यदि ऐसी बात है तो क्यों आपकी सोलह हजार रानियाँ सुरत-महोत्सव (रतिक्रियाप्रसङ्ग) में अतृप्त हुईं कामातुर

होकर उस मधु का त्याग करके आपके अधर का पान करती हैं? उनकी रूचि आपके अधरोष्ठ के पान में विद्यमान है, इसीलिए वे चरणकमलों के मधु से वञ्चित हैं। प्रपन्न कामादि विकारों से वञ्चित हैं तभी उनकी रूचि भगवच्चरणारविन्दमकरन्दरस के पान में है। ऐसा विभेद ही क्यों है? यही आक्षेप कवि का है॥८१॥

नलिननयना नूत्नस्मेरस्मितस्फुरिताधरा
निधुवनविधौ वक्त्रं पीत्वा प्रभो! भवदङ्गनाः।
मुदमुपगतास्ताश्चेद् राधामलङ्कृतिमङ्के
व्रजभुवि भवान् धृत्वा धारां रसस्य च नाप किम्॥८२॥

**सहृदयहृदयप्रकाशः**

हे प्रभो! सुरतसंपादने नलिननयना नवीनेन इषद्विकसितेन मन्दहासेन स्फुरन्नधरो यासां ता भवतोऽङ्गनास्तव मुखं पीत्वा न तु केवलमधरम्। अनेन तासां तृष्णाधिक्यं भगवतो मुखस्य स्पृहणीयत्वञ्च ध्वन्यते। एवङ्कारिण्यस्ता यदि मुदमवाप्तास्तदा स्वीयेऽनुकम्पितेऽङ्के भूषाभूतां राधां धृत्वा किं भवान् व्रजे रसस्य धारां प्रवाहं नाप? अर्थात् प्रापैव। केवलं भवानेव न कृतार्थयति प्रपन्नान्, अपि तु ते भवन्तमपि कृतार्थयन्तीत्यभिप्रायः॥८२॥

**भाषानुवाद**

हे प्रभो! आपके द्वारा यदि भूलोक का कोई प्राणी उपकृत होता है तो आप भी किसी से उपकृत होते हैं। तथा हि—कमल के समान नेत्रों वाली और नूतन विकसित मन्दहासों से स्फुरित अधर वाली आपकी अङ्गनायें अर्थात् सुन्दर अङ्गों वाली स्त्रियाँ संभोगलीला में आपके वदन का साभिलाष निरीक्षण करके आनन्दविशेष प्राप्त कीं तो क्या आप व्रजभूमि में अलङ्कारभूत राधाजी को अपने अङ्ग में धारण करके रस की धारा को प्राप्त नहीं किये? आपके द्वारा यदि

उन अङ्गनाओं को सुख मिला तो आपको भी श्रीराधिकाजी के आलिङ्गन से पर्याप्त सुख मिला ही, यह अभिप्राय है॥८२॥

**पुलकिततनुं तन्वीं कुब्जां कपोलचलालकां**
**वलितलतिकालोलामक्ष्णोर्विलासललद्गिरा।**
**सचकितमहो तामाहूय प्रभो परिरभ्य च**
**स्तनमृगमदैराधिं साकं च चोरितवान् कथम्॥८३॥**

**सहृदयहृदयप्रकाशः**

हे प्रभो! नयनयोर्विलासेनोपलक्षितया साभिलाषवाचा कण्टकितापघनां बहुकालविरहविषादेन तन्वीन्तथा कपोलयोश्चलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्यास्ताम्, संचलितलतिकावत् लोलां तामधमनायिकां कुब्जामाहूय परित आलिङ्ग्य च भवान् तस्याःस्तनयोः सुलिप्तैः मृगमदैः = कस्तूरीभिः सह आधिं मनोव्यथामपि कथं चोरितवान्? अत्र भगवता तस्यास्तथाऽऽलिङ्गनं कृतं यथा स्तनाङ्गरागसंसारकारणीभूतानादिवासनयोः संक्षयो जात इति वस्तुना मनसिजशास्त्रनिर्देशमपेक्ष्य विधीयमानसुरत-प्रकारादतिविलक्षणरतप्रकार इति व्यतिरेकालङ्कारो ध्वन्यते। अथवा हे प्रभो! लोके तावत् स्तनोपपीडमालिङ्ग्य कामिनः कामिनीनां केवलं तत्संसक्तं मृगमदादिकमेवापहरन्ति, न तु मनोव्यथामपि। कथम्? उत्तरोत्तरं मदनस्य विवर्धमानत्वात्। भवाँस्तु तामप्यपनयसीति व्यतिरेकालङ्कारेण भगवत्सुरतसंपादनकर्मणोऽविद्यातद्विलासनिर्वतने श्रुतिस्मृतिप्रतिपादितसाधनातिशायिसाधनत्वं व्यज्यते। अथवा कथं कुब्जाया एवाधमनायिकायास्त्वया मृगमदैःसहाधिरपहृतः, कथन्नास्माकमपहरसीत्याक्षेपो महिषीणां कवेर्वेति यथायथं योजनीयम्॥८३॥

### भाषानुवाद

हे कृष्ण! चलित लता के समान चञ्चल, कपोलों में चञ्चललटों को लटकाने वाली रोमाञ्चित कृशाङ्गी कुब्जा को आप अपने नयनों के विलासों के साथ अपनी क्रीडाप्रधान वाणी से चकिततया बुलाकर और उसका प्रगाढ आलिङ्गन करके स्तनों में विद्यमान कस्तूरी के साथ उसकी मानसी व्यथा को भी कैसे चुरा लिये? कुब्जा के साथ भगवान् ने ऐसा रमण किया कि उसके स्तनों की कस्तूरी तो जाती रही, उसका भवबन्धन भी समाप्त हो गया। यह कृपा कुब्जा के प्रति ही क्यों है भगवन्!? यह कवि का आकूत है अथवा अन्य रानियों का आक्षेप समझना चाहिये कि कुब्जा के साथ जैसी संभोग-लीला है वैसी हमारे साथ क्यों नहीं? निश्चय ही भगवान् द्विभावग्रस्त हैं।।८३।।

**स्मितसितरसैः सिक्तामुक्तिं निशम्य तवाप्रियां**
**स्तनयुगमहो सिञ्चन्ती याऽसितैर्नयनाम्बुभिः।**
**अधित कृपणा चित्ते चिन्तां च तामुरसि प्रियां**
**करकिसलयै र्बिभ्रद् भ्रान्तिं प्रभो! कृतवान् पृथक्।।८४।।**

### सहृदयहृदयप्रकाशः

हे प्रभो! या भवतः प्रिया रुक्मिणी तवाप्रियामुक्तिं निशम्य=श्रुत्वा। कथं भूताम्? स्मितसितरसैःसिक्ताम्। अनेन भगवतः परिहासो व्यज्यते। परिहासविजल्पितं श्रुत्वापि कज्जलमिश्रणेनासितैः कृष्णैरश्रुभिः कुचयुगलं सिञ्चन्ती दीना सती चिन्तां चित्ते अधित धृतवती। तामेव प्रियां निजवक्षःस्थले करकिसलयै र्धृत्वा भ्रान्तिं तस्याः पृथक् कृतवान्। स्वयमेव भ्रान्तिमुत्पाद्य स्वयमेव भगवान् भक्तस्य तामपाकरोतीति अचिन्त्यचारित्रं व्यज्यते।।८५।।

### भाषानुवाद

इस पद्य के द्वारा यही इङ्गित है कि भगवान् ही भ्रम पैदा करके उसका नाश भी करते हैं। हे प्रभो! आप अपनी प्रेयसी श्री

रुक्मिणीजी को अपने मन्दहासों के स्वच्छ रसों से सींची गयी अप्रिय वाणी सुनाये तो वे कज्जलमिश्रित अपने काले आँसुओं से दोनों स्तनों को सींचती हुईं अपने मन में अपार चिन्ता से आकुल हो गयीं। उन्हें वैसा देखकर आपने तत्काल अपने वक्षःस्थल में करकिसलयों से दबाकर उनके भ्रम को दूर कर दिया। भगवान् के द्वारा परित्याग की आशङ्का से ग्रस्त रुक्मिणीजी का भ्रम तभी दूर हुआ जब भगवान् ने उन्हें अपने वक्षःस्थल में लगा लिया, यह अभिप्राय है॥८४॥

**श्रुतिनियमितैर्नेत्रैर्मुक्ता मनोजशरास्तथा**
**कुवलयदृशां गाढाश्लेषप्रमोदझराः प्रभो!**
**दशनविशदच्छायास्मेराधरामृतशीकरा**
**भृशमधिगता हा ते लीलारसा न सकृन् मया।।८५।।**

**सहृदयहृदयप्रकाशः**

हे प्रभो! स्वर्गादिसांसारिकसुखोपलब्धये यत् पुण्यकार्यमिष्टापूर्ताख्यं शास्त्रेषु प्रदिष्टं तस्य सकलं फलं मया लब्धं किन्तु ते लीलारसा मया सकृदपि न लब्धाः। परमलब्धव्यस्यालाभेऽपारखेदसंसूचनायैव 'हा'शब्दः। ये तावत् प्राप्तास्त एवेदानीमपारखेदहेतवो जाता इति काव्यलिङ्गता ध्वन्यते। के त इत्यपेक्षायामाह पादत्रयेणाद्येन। कुवलयदृशां श्रुतिनियमितैर्नेत्रैर्मुक्ता मनोजशरास्तावत् प्राप्ता एव। अत्र श्रुतिनियमितैरित्यनेन विषमेषुबाणानामबन्ध्यफलत्वं ध्वन्यते तेन च सुरतसुखावाप्तये योग्यतापि। तथा तासामेव गाढालिङ्गनेन संजातानां प्रमोदानां झरास्ततयः प्राप्ताः, एवमेव तासां दशनस्वच्छच्छायाभिरीषद्विकसिताधरे समुद्भूता अमृतबिन्दवोऽपि प्राप्ता एव। न केवलमेकवारम्, अपि तु भृशम् वारं वारम्॥८५॥

### भाषानुवाद

हे प्रभो! नीलकमल के समान नयनों वाली सुन्दरियों के कानों तक विस्तीर्ण नेत्रों से छोड़े गये बाणों और उनके प्रगाढ़ आलिङ्गन से जायमान आनन्दप्रवाहों को तथा उनके दाँतों की स्वच्छ कान्ति से थोड़े विकसित अधरों में विद्यमान अमृत की बूँदों को तो मैंने जन्म-जन्मान्तरों में बार-बार प्राप्त किया किन्तु हाय! भगवन्! आपके लीलारसों को एक बार भी प्राप्त नहीं कर सका॥८५॥

**वचनकुलिशैर्दीर्णं दीनं नृणां च सहस्रधा**
**मम तु हृदयं यस्मात् कृष्ण! स्थितस्त्वमपैषि हा!।**
**विषयपटलाच्छन्ने नेत्रे च नीरझराञ्चिते**
**बहिरपि पुनः खेलन्तं त्वां निरीक्षितुमक्षमे।।८६।।**

### सहृदयहृदयप्रकाशः

इतिहासपुराणादिषु दैन्यसत्त्वे भगवतो भक्तहृद्यवस्थानमभि-व्यञ्जनं वा श्रूयते। तदेतत् परामृश्याह—हे कृष्ण! मम तु हृदयम्। तुरिति भिन्नक्रमो नैकविधसंतापद्योतको हृदयपदस्याग्रेऽन्वेति। कथम्भूतं तदित्याह—नृणां वाग्वज्रैः सहस्रप्रकारेण विदीर्णमत एव दीनम्। हा! दौर्भाग्यमेव तस्य यतस्त्वं स्थितः सन् अपैषि=पलायसे। ईश्वरःसर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति, इति स्मृतेस्तवावस्थानन्तु नियतमेव, तत्राप्यपरो हेतुरुपोद्वलको दैन्यात्मक उपतिष्ठते, किन्तु वैपरीत्यमेव दृश्यते इति विशेषोक्तिरलङ्कारः। ननु हृदयाद् बहिर्भगवान् अत एव गच्छति यतो नयनातिथिः क्रियतामित्याशङ्कामपनुदन्नाह—मम नयने विषयावरणावृते अश्रुचयपूर्णे सती त्वां पुनः बहिरपि खेलन्तं विलोकयितुमसमर्थे, अहो दुरन्ता मम हतभाग्यतेति व्यज्यते॥८६॥

### भाषानुवाद

हे कृष्ण! मनुष्यों के वचनवज्रों से मेरा दीन हृदय हजारों टुकड़ों में विदीर्ण हो चुका है जिसमें विद्यमान आप दूर भाग रहे हैं। हाय,

यह कितने कष्ट की बात है कि व्रजभूमि में आप बाहर क्रीडा करते हैं किन्तु विषयों के आवरण से ढके और आँसुओं से तर मेरे दोनों नेत्र आपको देख नहीं पा रहे हैं। मेरी हतभाग्यता का कोई अन्त नहीं है, भगवन्॥८६॥

**तनुतरलिततारा चन्द्रिकाचारुहारा**
**रजनिरियमिदानीं सौरभाक्ताश्च वाताः।**
**मधुमथन! पिकीनां पञ्चमी गीतिरारा-**
**दहह तव वियोगे चित्तमुद्वेजयन्ति।।८७।।**

**सहृदयहृदयप्रकाशः**

हे कृष्ण! तव संयोगे रजनिप्रभृतयो य उद्दीपनविभावा मम स्वसंवेदनगोचरलोकोत्तरान्तराह्लादचर्वणाया अभूवँस्त एव त्वद्वियोगे मम चित्तोद्वेगजनका:सन्तीत्यनेन भगवद्दर्शनायाकुलत्वं व्यज्यते॥८७॥

**भाषानुवाद**

हे मधुमथन! तनु अर्थात् छोटी और लोल तारायें हों जिसमें तथा चाँदनी ही सुन्दर हार हो जिसका, ऐसी मनोहर रात्रि एवम् सुगन्ध से व्याप्त बहने वाले पवन तथा कोकिलाओं के पञ्चम नाद, ये सभी आपके वियोग में मेरे चित्त को उद्वेलित कर रहे हैं। प्रभो! आपके संयोग में जो चित्त के आह्लादक तत्त्व हैं वे ही इस समय आपके वियोग में भय उत्पन्न कर रहे हैं। कहाँ हैं आप? आते क्यों नहीं? यह अभिप्राय है॥८७॥

**तनोति सरणिं गता मुदमहो स्मृतेर्मुग्धता-**
**सुसंस्कृतमनोरमा रतरमा च लीला व्रजे।**
**दुनोति तदनन्तरं विरहदावदग्धान्तरा**
**मनो नववधूरिव प्ररुदतीव भूमिस्तव।।८८।।**

### सहृदयहृदयप्रकाशः

हे प्रभो! वृन्दावनमुपगतस्य त्वदीयसकललीलां स्मरतो मम पूर्वमानन्दघनवृद्धिर्भवति। पश्चात् त्वं तत्र नासीति बुद्ध्याऽपारव्यथा जायते। श्रीमद्भगवत्सन्निधान एव तल्लीलास्थली मे प्रमोदाय न तच्छून्य इत्यभिप्रायः॥८८॥

### भाषानुवाद

हे माधव! व्रज में सम्पादित हुई आपकी लीला अद्भुत है। उसमें आपका मुग्ध स्वभाव इस तरह घुला हुआ है कि वह ठीक से संस्कृत होकर मनोरम हो गयी है। धन्य है वह आपकी लीला जिसमें रमा अर्थात् लक्ष्मी ने भी रमण किया है। मेरे स्मरणपथ में आयी वह आनन्द का विस्तार करती है। भगवन्! बाद में जब मैं आपकी क्रीडाभूमि को आपसे शून्य देखता हूँ तो वह मेरे मन में वैसी ही पीडा देती है जैसी विरहरूपी दावानल में दग्ध मन वाली रुदन करती नवेली वधू पीडा देती है। व्रजभूमि की वही दशा हो गयी है जो विरहिणी नववधू की होती है, यह अभिप्राय है॥८८॥

**यस्याश्चारुस्मितविलसितैर्जातसंज्ञं क्षमं तत्-**
**प्रीतिं प्राप्तुं त्रिभुवनमहो सैव राधा विना यम्।**
**व्यापन्नेव प्रपतति भुवि स्थावरानार्द्रसत्त्वान्**
**कुर्वन्ती स त्वमयि भगवन्! नासि कस्येह चेष्टः॥८९॥**

### भाषानुवाद

हे भगवन्! जिस राधिका के मनोहर मन्द हासों के विलासों से तीनों लोक ही चेतना को प्राप्त हुआ लोकोत्तर ब्रह्मानन्द को प्राप्त करने में समर्थ हो जाता है वही राधिका जिसके बिना स्थावर वृक्ष आदि प्राणियों को भी गमगीन करके मरी हुई की तरह पृथ्वी पर गिर जाती है ऐसे आप किसके अभीष्ट नहीं हो सकते? अर्थात् हर प्राणियों के परम प्राप्य आप ही हैं। ऐसा होने पर भी मानव

यदि प्रपञ्चपरायण हैं तो आपकी माया के ही प्रभाव से, यह अभिप्राय है॥८९॥

आवासस्ते सुललिततनो राधिकायाः प्रकाम-
च्छायासारैर्जितघनरुचेश्चेतसि प्रीतियोगात्।
नूनं तस्याः स्फुरितकुचयोस्तेन मध्ये निषण्णा
संक्रान्ताऽऽभा सततमसिता पद्मयो र्भात्यलीव।।९०।।

भाषानुवाद

हे भगवन्! अपनी अत्यधिक कान्तियों की वृष्टि से मेघ की कान्ति को जीत लेने वाले आपकी प्रीति सुललित शरीर वाली श्रीराधिका में है। इसीलिए आपका निवास भी उनके हृदय में है। मेघ के समान आप उनके हृदय में रहते हैं। तभी तो उनके फुरफुराते स्तनों के बीच में प्रतिफलित काली कान्ति वैसे ही सुशोभित हो रही है जैसे दो कमलों के बीच में भौंरे सुशोभित होते हैं। यहाँ उपमालङ्कार से राधिका के स्तनों में वे कुचाग्र नहीं हैं अपितु उनके हृदय में विराजमान भगवान् की काली कान्ति उभर आयी है, यह अपह्नुति अलङ्कार ध्वनि है॥९०॥

विद्वद्वृन्दाभिलषितपदं स्वीयवैकुण्ठसंज्ञं
हित्वा भूमावतरसि पुनः कृष्ण! दीव्यँस्त्वमेव।
मृत्स्नामत्सि प्रविशसि गृहं गव्यहेतोः प्रियाणां
वासस्तासां हरसि भगवन्। सौख्यमेव प्रदातुम्।।९१।।

भाषानुवाद

हे प्रभो! जिस पद की कामना विद्वत्समुदाय करता है ऐसे अपने वैकुण्ठनामक पद का त्याग करके आप भूमि पर अवतार लेते हैं और वहाँ प्राकृत बालक की तरह क्रीडा करते हुए मिट्टी खाते हैं। इतना ही नहीं, नवनीत (मखन) के लिए आप प्रिय गोपियों के घर में भी घुस जाते हैं और कभी उनके वस्त्रों का भी अपहरण

करते हैं। हे कृष्ण! यह सब कार्य आप उन्हें परमानन्द प्रदान करने के लिए ही करते हैं। आप इतने करुणावरुणालय हैं भगवन्! तथापि जीव भ्रान्त हैं। धन्य है आपकी माया, यह आकूत है।।९१।।

**कन्दर्पेषुव्यथितहृदया निर्जरा लोलहाव-**
**स्पन्दिस्मेराधररससुधामङ्गनानां निपीय।**
**प्राणत्राणं विदधति वृथा कृष्ण! धन्याश्च तेऽत्र**
**त्वत्पादाब्जं हृदि निदधतो निर्धना ये म्रियन्ते।।९२।।**

**सहृदयहृदयप्रकाशः**

हे कृष्ण! मनोजबाणव्याकुलान्तःकरणा देवा अङ्गनानां स्वर्वनितानां निजचञ्चलविलासैः किञ्चिच्चलितानामीषद्विकसितानाञ्चाधराणां रस एव सुधा पीयूषम् तद् निपीय व्यर्थमेव प्राणरक्षणं कुर्वन्ति। मदनबाणहतानामङ्गनाधरसुधैव पुनर्जीवनोपाय इति भगवान् वात्स्यायनः। मम मतौ तु ते निर्धना एव धन्या धनमाप्ता भवन्ति ये चात्र लोके भगवन्! तव चरणकमलं हृदये कुर्वन्तो म्रियन्ते। भगवत्प्रीतिं विना जीवनमपि मरणापेक्षया फल्गुप्रयोजनमित्यभिप्रायः। व्यतिकालङ्कारः।।९२।।

**भाषानुवाद**

हे कृष्ण! काम के बाणों से व्यथित होकर देवगण अप्सराओं के चञ्चल विलासों से फुरफुराते अधरों के अमृतरस का पान करके व्यर्थ ही अपने प्राणों की रक्षा करते हैं। आपकी भक्ति के विना देवों का भी जीवन व्यर्थ है, यह अभिप्राय है। उनसे तो कृतार्थ वे निर्धन प्राणी हैं। जो इस मर्त्यलोक में ही आपके चरणकमल को अपने हृदय में रखकर मर जाते हैं। इस प्रकार वे मुक्त हो जाते हैं। देवगण तो स्वर्ग में रहते हुए भी मुक्त नहीं होते। इसीलिए उनका जीवन वृथा है, यह अभिप्राय है।।९२।।

**साक्षात्कारः सपदि तव चेद् वैभवस्त्रीकलासु**
**प्रीतित्यागाच्च भवति भवद्विप्रयोगाश्रुजालैः।**
**पापस्याहो सततममृतं मे प्रवृत्तिः पदं तत्**
**त्यक्त्वा तासु प्रसरति मुधा माधव! ब्रूहि कस्मात्।।९३।।**

### सहृदयहृदयप्रकाशः

हे माधव! पुराणादिभक्तिशास्त्रपर्यालोचनेनेदमेव निश्चीयते यद् भवतः साक्षात्कारः सांसारिकविभुतावनिताकुचकलशनितम्बादि-विषयकानुरागत्यागात् तथा भवत एव वियोगे सति दुःखातिशयप्रयुक्तानामश्रूणां प्रतानै र्भवति। यद्येवं तर्हि मम पापस्य तच्छाश्वतं पदं त्यक्त्वा कथं तासु विभुतावनिताकलासु भवति? यस्मात् कारणात् त्वत्साक्षात्कारसाधने प्रवृत्ति र्नास्ति तत एव हेतोरहं पाप इति पापस्येति पदं व्यञ्जकत्वाभिप्रायेण प्रयुक्तम्। तेन संसारानुराग एव भगवद्वैमुख्यकरणात् पापकर्मेति फलितम्।।९३।।

### भाषानुवाद

हे माधव! यदि आपका साक्षात्कार विभुता और स्त्रियों की कलाओं में अनुराग का त्याग कर देने से तथा आपके ही वियोग में झर-झर आँसू बहाने से ही तत्काल हो जाता है तब मेरी प्रवृत्ति का प्रसार उसी विभुता और स्त्रीकलाओं में व्यर्थ क्यों हो रहा है? इसे आप ही कहें! मेरी प्रवृत्ति आपकी प्राप्ति के साधनों में न होकर व्यर्थ ही विषयप्रपञ्चों में हो रही है। निश्चय ही इस कारण से मैं महान् पापी हूँ। यह सब क्यों हो रहा है, भगवन्!।।९३।।

**मयूरा नृत्यन्ति व्रजभुवि च वीक्ष्याभ्रमसृणं**
**भवन्तं षट्पादा अपि नयनरागाः प्रमुदिताः।**
**स्फुरन्ति ज्योत्स्नाभा विपिनलतिकास्ताश्च चकिता**
**न मे पापं चेतः सकृदपि तु पापाद् विरमति।।९४।।**

### सहृदयहृदयप्रकाशः

हे भगवन्! व्रजभूमौ भवन्तं दृष्ट्वा मयूरा अपि नर्तनं कुर्वन्ति। यतो हि भवान् मेघ इव स्निग्धोऽस्ति। भ्रमरा अपि नयनयो रागो येषां तथाभूताः प्रमुदिताः सन्ति। ता वनलता अपि चन्द्रिका इवाभा यासां तथाभूताश्चकिताः सत्यः स्फुरन्ति। यदि तिर्यक्स्थावर-प्राणिष्वपि भवान् कमपि चमत्कारमाविष्करोति तर्हि किमपराद्धं मम चेतसा। कथमदः पापं सकृदपि पापात् न विरमतीति दैन्यबाहुल्यं प्रकाशितं भवति॥९४॥

### भाषानुवाद

हे भगवन्! व्रजभूमि में मेघ के समान सरस-स्निग्ध आपको देखकर मयूर नर्तन कर रहे हैं। अपने नेत्रों में अनुराग लिए भौरे भी आह्लादित हैं। किं बहुना? चन्द्रिका के समान प्रफुल्ति कान्ति वाली वनलतायें भी चकित होकर स्फुरित हो रही हैं। इनसे भी मैं गया गुजरा हूँ कि मेरा पापी मन एक बार भी पाप से अलग नहीं हो रहा है॥९४॥

**असारं संसारं मुरमथन! मत्वा च विषयान्**
**त्यजन्तःकेचित् त्वां धवलचिकुरश्मश्रुचमरैः।**
**ददानाः सेवन्ते व्यजनसुखमन्ये च यतयः**
**शिरः पक्वं बिल्वं निदधति पुरस्ते चरणयोः॥९५॥**

### सहृदयहृदयप्रकाशः

हे मुरमथन! यैर्बाह्यं सासांरिकवस्तुजातं परित्यक्तं ते केचित् नैष्ठिकब्रह्मचारिणस्त्वां सेवन्त इत्यन्वयः। कथम्? धवलाः परिपाकवशाद् विशदाश्चिकुराश्चूर्णकुन्तलाःश्मश्रूणि च चमरास्तैर्व्यजनस्य सुखं ददानाः। अत्रात्मनेपदप्रयोगात् स्वसुखायैव ते तथाकुर्वन्तीति गम्यते। अन्ये च निष्परिग्रहाः सन्न्यासिनस्तव पादयोरग्रे शिरो मस्तकमेव पक्वं बिल्वं स्थापयन्ति नैवेद्यबुद्ध्येति

शेषः। स्वावयवैरेव ते तवापचितिं विदधते, न तु बाह्यं वस्तुजातं परिगृह्णन्ति। कदाचित् तत्र संसारबीजभूताया आसक्तेरपि संभवादित्यभिप्रायः।।९५।।

### भाषानुवाद

हे मुरमथन! इस संसार को निःसार समझकर विषयों का परित्याग करते हुए कुछ नैष्ठिक ब्रह्मचारी अपने सफेद केशों और मूछों से ही आपको पङ्खे का सुख देते हुए आपकी सेवा करते हैं तथा मुण्ड मुड़ाये अन्य संन्यासी भी नैवेद्य की बुद्धि से आपके चरणों के सामने अपना मस्तकरूपी पका हुआ बेल रख देते हैं। आसक्ति हो जाने के भय से वे बाह्य उपकरणों पर ध्यान नहीं देते, यह अभिप्राय है।।९५।।

**निजाङ्के न्यस्तं तच्चिकुरचयचारु स्मिततति-**
**स्रवत्प्रालेयैस्तैर्मसृणमपि पाणीन्दुसुधया।**
**यथा राधाशीर्षं स्नपयसि तथैव स्फुरदहो**
**प्रपन्नानां स्वामिन्! विलुलितजटाजालमनिशम्।।९६।।**

### सहृदयहृदयप्रकाशः

हे स्वामिन्! नूनं त्वमेव प्रपन्नजनपरायणः। यतो हि निज-करचन्द्रामृतेन श्रीराधायाः स्वस्याङ्के निहितन्तथा तस्या एव केशकलापेन रमणीयं सत् मन्दहासानां पङ्क्त्याः स्रवद्भिः प्रालेयैः स्निग्धमपि मस्तकं यथा स्नपयसि तथैव प्रपन्नानां छिन्नभिन्नं स्फुरज् जटाजालमपि। एतेन सांसारिकीं दृष्टिं व्युदस्य सततं श्रीभगवतो भजनयोग्यता प्रतिपादिता भवति।।९६।।

### भाषानुवाद

हे स्वामिन्! आप अपने अङ्क में रखकर केशकलापों से रमणीय तथा मन्दहासों के बहते तुषारबिन्दुओं से सरस हुए श्री राधिकाजी के मस्तक का अभिषेक जैसे अपने करकमलों के अमृत से करते

हैं वैसे ही आप प्रपन्नों के किञ्चित् चलित जटाजालों का भी अभिषेक करते हैं। सर्वथा प्राणियों के द्वारा सतत वन्दनीय और भजनीय आप हैं, यह अभिप्राय है॥९६॥



**अभिलषति जनोऽयं तेऽङ्घ्रिफुल्लारविन्द-**
**च्छुरितनवमधूनि प्रीतिमञ्चँस्तथैव।**
**मृदुललितविलासैः सुस्थिरस्मेरहासै-**
**स्तटभुवि यमुनायाः कृष्ण! नित्यं विहारम्॥९७॥**

**भाषानुवाद**

हे कृष्ण! यह जन जैसे आपके चरणरूपी खिले कमलों में परिव्याप्त नूतन मधु (रस) का सेवन करना चाहता है वैसे ही आपमें प्रेम रखता हुआ कोमल और सुन्दर विलासों तथा स्थिर थोड़े विकसित हासों से उपलक्षित यमुना की प्रान्तभूमि में नित्य विहार करना चाहता है॥९७॥

**शीतांशुशीतलसितांशुकलापसिक्ते**
**गुञ्जद्द्विरेफमृदुकोकिललापयुक्ते।**
**गोपीसहस्रलसिते यमुनानिकुञ्जे**
**गोपाल! खेलसि मुदा क्व मुहुश्च यासि॥९८॥**

**सहृदयहृदयप्रकाशः**

हे गोपाल! यमुनातटीये लतागृहे कुत्र हर्षपूर्वकं क्रीडसि तथा कुत्र मुहुर्बारंबारं गच्छसि? कथम्भूते यमुनानिकुञ्जे? इत्यपेक्षायामाह—शीतांशोश्चन्द्रस्य शीतलानां स्वच्छानाञ्चांशूनां कलापेन सिक्ते तथा गुञ्जद्भिर्भ्रमरैः कोकिलानां पञ्चमलापैश्च युक्ते, पुनश्च गोपीनां सहस्रेण सुशोभिते॥९८॥

**भाषानुवाद**

हे गोपाल! चन्द्रमा की शीतल और स्वच्छ किरणकलापों से सिक्त अर्थात् आच्छादित तथा गुञ्जारव वाले भौरों और कोकिलाओं

के कोमल आलाप से युक्त एवम् हजारों गोपियों से समुल्लसित यमुना के तटवर्ती झुरमुटों में आप कहाँ आनन्द से खेलते हो और बार-बार कहाँ चले जाते हो?॥९८॥

**स्निग्धप्राये मधुरिपुवपुःशोभिते गोपवृन्दे**
**वृन्दारण्ये तृणतरुलता नृत्यमग्ना मयूराः।**
**मुग्धा गावश्च चपलमृगाः पत्रिपङ्क्तिश्चमर्यः**
**कालिन्द्याश्च प्रसरतरला आर्द्रवाता जयन्ति।।९९।।**

**भाषानुवाद**

इस पद्य से वृन्दावन की झाँकी ही प्रस्तुत की गयी है। प्रायः सरस तथा श्रीकृष्ण के शरीर की उपस्थिति होने से विलसित एवम् गोपसमुदाय वाले उस वृन्दावन में तृण, वृक्ष और लतायें, नृत्य में मग्न मोर, मुग्ध हुईं गायें, चञ्चल मृग, पक्षियों की श्रेणियाँ, चमरियाँ और यमुना के प्रसरणशील चञ्चल भीगे पवन, ये सभी अद्भुत हैं। इनके समान सारवान् संसार में कोई वस्तु नहीं है, यह अभिप्राय है॥९९॥

**कम्रश्यामप्रतनुमसृणानोकहैराप्तकामा**
**कामासारैरुपचिततनूः कुन्दकान्तेश्चयानाम्।**
**कम्रां शोभां तव निवसतिर्याति नित्यं यया त्वं**
**मुग्धस्तत्र व्रजयुवतिभिर्लोललीलां तनोषि।।१००।।**

**सहृदयहृदयप्रकाशः**

हे कृष्ण! कम्पनशीलैः श्यामवर्णैः प्रकर्षेण तनुभिः स्निग्धैश्च वृक्षैराप्तःप्राप्तः कामो यया तथाभूता, तथा कुन्दाख्यप्रसूनानां कान्तेः समुदायानामासारैर्वृष्टिभिरुपचिता तनुःशरीरं यस्यास्तथाभूता, तव निवसतिर्निवासस्थानं कमनीयां कां लोकोत्तरां शोभां प्राप्नोति? यया शोभया सततं विमुग्धस्त्वं तत्र व्रजाङ्गनाभिः सह चञ्चललीलां

विस्तारयसि? धन्या सा निवसतिर्यत्र वैकुण्ठनाथोऽपि समागत्य व्रजवनिताभिः साकं क्रीडतीत्यभिप्रायः॥१००॥

भाषानुवाद

हे कृष्ण! कम्पन करने वाले श्यामल और पतले वृक्षों से अपनी कामनाओं को प्राप्त कर लेने वाली तथा कुन्दपुष्पों की कान्तियों से परिपुष्ट शरीर वाली आपकी रासभूमि कौन-सी अलौकिक और कमनीय शोभा प्राप्त करती है जिससे प्रमुग्ध हुए आप व्रज की युवतियों के साथ वहाँ चञ्चल रासलीला का विस्तार करते हैं?॥१००॥

**एका गोपी पिबति तरलोल्लासि रूपं विमुग्धा**
**हस्तेनाऽन्याऽमृतरसमुचा कृष्ण! कल्यं ददाति।**
**काचिच्चारुस्फुटकुचयुगे पादपद्मं दधाति**
**प्रेमावेशाल्ललितमपरा प्रेयसाऽऽविष्करोति।।१०१।।**

सहृदयहृदयप्रकाशः

अनेन गोपीनां भगवन्तं प्रत्यनुरागातिशय एव प्रकाश्यते। सुस्पष्टाभिप्रायमिदम्॥१०१॥

भाषानुवाद

हे कृष्ण! आपकी ही कृपा से गोपियों के हृदय में जो आपके प्रति प्रीति पैदा हुई है वह अद्भुत है। एक कोई गोपी आपके ऊपर विशेषरूप से मुग्ध हुई आपके चञ्चल और उल्लसित रूप का पान कर रही है तो अन्य अपने अमृतरस को बहाने वाले हाथ से कलेवा दे रही है। कोई तो अपने सुन्दर-विकसित दोनों स्तनों में आपके चरणकमल को रख रही है तो कोई और प्रेमावेश में आकर आपके सामने ललित अर्थात् स्वयम् समुद्भूत रत्यर्थ चेष्टा को प्रकट कर रही है॥१०१॥

कीदृग् भावः स सुजनहृदि प्रेम येनाञ्जसा स्यात्
मोदोऽसौ कः श्रयति पुरुषः प्राप्य यं त्वत्पदाब्जम्।
शान्त्युद्रेकप्रचुरसमता का नु सा कृष्ण! यस्यां
सम्बद्धेव प्रसरति सदा स्वर्गसोपानपङ्क्तिः।।१०२।।

सहृदयहृदयप्रकाशः

हे कृष्ण! ममैका जिज्ञासा जागर्ति यस्याः समाधानं त्वमेव कुरु! का सेत्यपेक्षायामाह—कीदृगिति। सुजनानां कीदृशो भाव उद्भासते यद्बलेन शीघ्रं त्वद्विषयकं प्रेम स्यात्। यं प्राप्य कोऽपि पुरुषस्त्वच्चरणकमलं सेवते स आनन्दः स्वसंवेदनगोचरः कः? यस्यां स्वर्गसोपानपरम्परा सततं सम्बद्धेव प्रसरति सा शान्तेरुद्रेकेण प्रचुरा समता का? यत्प्रयोजनमुद्दिश्य जनस्त्वत्प्रीत्यादौ प्रवर्तते नूनं तत् किमप्यन्यदेव। तत् किमिति? भगवन्! तज्ज्ञानपिण्डदानद्वारा मामपि कृतकृत्यं विधत्स्वेत्यभिप्रायः॥१०२॥

भाषानुवाद

हे कृष्ण! उन साधु पुरुषों के हृदय में ऐसे किस भाव का उदय हुआ है जिससे शीघ्र ही आपके प्रति प्रेम हो? जिसे प्राप्त करके पुरुष आपके चरणकमलों का ही सेवन करने लगता है वह आनन्द क्या है? निश्चय ही वैषयिक आनन्द से वह भिन्न है, अन्यथा कोई विषयों से विरक्त होकर आप के चरणों का सेवन क्यों करेगा? जिसमें स्वर्गसोपानों की परम्परा हमेशा जुड़ी हुई जैसी फैलती रहती है वह पर्याप्त साम्यदृष्टि क्या है जहाँ शान्ति की ही अधिकता रहती है। जिस किसी भी तरह आप संसार के प्रति समर्पित दृष्टि को अपनी ओर मोड़िये! यह आकूत है॥१०२॥

मनसिजरुचिमुषि मुदिरवपुषि तत-
सरसिजरजसि विपिन इतसवितरि।

**विचरति रतिरिह मम तु विजयसख**
**उदयतु नयतु च चरणनलिनमधु।।१०३।।**

**।।इति कविवरश्रीकमलाकान्तत्रिपाठिप्रणीतं माधवरतिविलसितं काव्यं सम्पूर्णम्।।**

**सहृदयहृदयप्रकाशः**

इतः गतः सविता सूर्यो यत्र तस्मिन् वने मनसिजस्य रुचिं मुष्णाति चोरयतीति मनसिजरुचिमुक्, तस्मिन् तथा मेघश्यामशरीरे विचरणं कुर्वति विजयसखेऽर्जुनसखे श्रीकृष्णे मम रतिरुदयतु तथा तदीयचरणनलिनयो रसं प्रापयतु।।१०३।।

इतिभार्गवगोत्रीयश्रीशिवगोविन्दत्रिपाठिपौत्र-श्रीमदुमाशङ्करत्रिपाठितनूजानन्तश्रीसमलङ्कृतजगद्गुरु-रामानुजाचार्यश्रीवासुदेवाचार्य-'विद्याभास्कर'शिष्यश्रीकृष्णनारायणाचार्योपनाम डॉ. कमलाकान्तत्रिपाठि-प्रणीतमाधवरतिविलसितव्याख्यासहृदयहृदयप्रकाशः सम्पूर्णः।।

**भाषानुवाद**

सूर्य जिसमें चले गये हों ऐसे वृन्दावन में काम की शोभा को चुराने वाले, मेघ के समान श्याम शरीर वाले कमलपरागों से आच्छादित भगवान् श्रीकृष्ण में मेरे प्रेम का उदय हो और वह प्रेम उनके चरणकमलों के रस की प्राप्ति भी कराये।।१०३।।

।।इति डॉ. कमलाकान्तत्रिपाठिप्रणीतमाधवरतिविलसितकाव्यभाषानुवादः सम्पूर्णः।।

**गुणैरेव स्वीयैर्विषमविषयप्रेमबहुलै-**
**रनड्वान् कोऽप्यत्र श्रुतिसरणिभित्तिं विदलयन्।**
**स्फुरद्गाढध्वान्तस्खलितगतिरुच्चै र्मुररिपोः**
**कृपादृष्टिं प्राप्य भ्रमिरुजमहो द्राक् शमयतु।।**



## आर्यमर्यादापीठ द्वारा प्रकाशित ग्रन्थ

| | | |
|---|---|---|
| १. | धर्मशुद्धि | डॉ. कमलाकान्तत्रिपाठी |
| २. | पातित्यपेटिका | डॉ. कमलाकान्तत्रिपाठी |
| ३. | प्रसुप्तोन्मेष | डॉ. कमलाकान्तत्रिपाठी |
| ४. | प्रेमपत्रम् | डॉ. कमलाकान्तत्रिपाठी |
| ५. | महाभारतसंग्राम और भीष्मनिर्वाण | डॉ. गिरीशदत्तपाण्डेय |

भारतीय आर्यमर्यादाविज्ञानसमिति
वाराणसी